॥ श्रीः ॥

# सनत्सुजातीयदर्शनम्

'चातकप्रिया'

संस्कृत-हिन्दीव्याख्याविभूषितम्

व्याख्याकारः
डॉ. यमुनारामत्रिपाठी 'यमुनेशः चातकः'
साहित्य-दर्शनाचार्यः, एम.ए., पी.एच्.डी.
प्राचार्यः
रघुनाथ संस्कृत महाविद्यालयः, सीतारोड,
चन्दौसी, मुरादाबाद, उ. प्र.

प्रकाशकः
शारदा संस्कृत संस्थानम्
वाराणसी-२१००२

# भूमिका

भरतकुलप्रसूतानामवनिपालानाममृतकथोपबृंहितं श्रीमद्वेदव्यासप्रतिभोत्पन्नं महाभारतं नाम महाकाव्यम्। एतस्य महाग्रन्थस्य नामकरणे स्वयं महाभारतमेवोदीरयति- **भरतानां महज्जन्म महाभारतमुच्यते**–(म० अ० ६२/३९)। नात्र केवलं कौरवपाण्डवानामैतिहासिकं युद्धवर्णनमपितु नानोपाख्यानालंकृतस्य भारतवर्षस्यान्तरात्मनः धार्मिकनैतिकादर्शस्य सांस्कृतिकजीवनस्य चास्ति रमणीयं काव्यात्मकं वर्णनम्। आदर्शस्वरेण साकं यथार्थमुच्चैरून्नयदिदं प्रोत्तुङ्गं। राष्ट्रीयमन्दिरमिव विरचितं विराजते। कथाः सहजाकर्षणप्रधानाः, असत्ये सत्यं स्थापयन्त्यः सर्वैक्यमुद्घोषयन्त्यः सूक्ष्मतापूर्वकं मानवजीवनं परिभाषन्ते। एतस्य माहात्म्यं निर्दिष्टमस्तीत्थम्–

**"धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।**
**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्।।"**

(म० अ० ६२/५३)

एंवमत्र ग्रन्थे भौतिकेन भारतेन सहान्तस्सत्यसमन्वितं चिन्मयमपि भारतं भासते।

प्रस्तुतमिदं "सनत्सुजातीयं दर्शनम्" महाभारतस्य उद्योगपर्वणः समुद्धृतम्मर्मस्पर्शि दिव्यमुपाख्यानमस्ति। वैशम्पायनो धृतराष्ट्रः सनत्सुजातश्चात्र मुख्यपात्रतामावहन्ति। सम्पूर्णश्च ग्रन्थश्चतुर्ष्वध्यायेषु विभक्तोऽस्ति। संप्रति संक्षेपतः प्रस्तूयते पात्राणां परिचयः-

**महात्मा सनत्सुजातः**–ब्रह्मणश्चतुर्षु मानसपुत्रेष्वेकोऽस्ति सनत्कुमारः। सनत्कुमार एवेतरनाम्नास्ति सनत्सुजातः। 'सनत्' शब्दस्यार्थाः–सर्वदा, सदा, निरन्तरम्, नित्यमित्यादयः। सुजातस्यार्थः–सु शोभनं सुन्दरं जन्म यस्य सः। सनत्सुजातः–यस्य जन्म नित्यमेव प्राणिनामात्मनश्च कृते शोभनम्। भगवद्भक्तः तत्त्वविदेवास्ति सनत्सुजातः। महर्षेः सनत्सुजातस्य अमृतोपदेशो महाभारते सुमहत् प्रसिद्धोऽस्ति। एतन्महर्षिकृतस्तात्त्वज्ञानोपदेश एव कालान्तरमवाप्य सनत्सुजातीयं दर्शनामित्युक्तम्।

महाभारतकालिकेषु सांख्याचार्येष्वेकः सनत्कुमारः–सनत्सुजात–अप्यस्ति।

छान्दोग्ये नारदेन सनत्सुजातमहर्षेः पठिता ब्रह्मविद्येति श्रूयते। सनत्कुमारो महानायुर्वेदाचार्योऽप्यासीत्। सनत्कुमारसंहिता ग्रन्थोऽस्तिं प्रमाणम्। महाभारते, हरिवंशपुराणे, वायुपुराणे च महर्षिः सनत्कुमारो ब्रह्मणो मानसपुत्र इत्युक्तः। जैनाचार्येण विरचिते 'अभिधानचिन्तामणौ'। सनत्कुमारस्य पर्यायाः प्रदत्ताः–स्कन्दः, स्वामी, महासेनः, सेनानी, षाण्मातुरः, कार्तिकेयः, कुमारः, गुहः, विशाखश्चेति। सनत्कुमारः ऋतम्भराप्रज्ञासम्पन्नोऽतिदीर्घजीवी पुरुष आसीत्। महात्मा सनत्सुजातः स्वकीयेन ज्ञानामृतेन बहून् दुःखदावदग्धान् क्लेशाक्तान् जनान् परितर्पयति शोकमोहमुक्ताँश्च करोति। विदुरस्य स्मरणमात्रेणैव समुपस्थितो भूत्वा गृहकलहविषण्णं शोकसन्तप्तं धृतराष्ट्रमुपदिशति। प्रख्यातोऽयं तत्त्वविदाचार्यः जीवन्मुक्त आसीत्। स्वभ्रातृभिः सह सनत्कुमारः कुमार एव समुत्पन्नः। सर्वे कुमाराः सप्तसंख्याका आसन् - सनः, सनत्कुमारः, सनत्सुजातः, सनकः, सनन्दनः, कपिलः, सनातनः। सर्वेऽप्येते ब्रह्मज्ञानिनो निवृत्तिमार्गाः योगविदः सांख्यविशारदाः धर्मशास्त्रज्ञाः, मोक्षधर्मप्रवर्तकाः, निष्क्रियाः, विरक्ताः, निरपेक्षाः वीतरागाः, निरिच्छाः, सर्वत्र गामिनः चिरंजीवाश्चासन्। सनत्सुजातो हिमाद्रौ कृतनिवासो विभाण्डकं महर्षिमप्युपदिदेश।

**वैशम्पायनः**–कृष्णयजुर्वेदीयायास्तैत्तिरीयसंहितायाः प्रथमोऽयं जनको विधातुश् चतुर्षु वेदप्रवर्तकशिष्येष्वेकः शिष्य आसीत्। याज्ञवल्क्य एतस्यैवासीत् सच्छिष्यो येन क्रुद्धस्य गुरोराज्ञया स्वाधीतः सम्पूर्ण एव यजुर्वेद उद्गीर्णः। पश्चात् वैशम्पायनस्यान्यैः शिष्यैः तित्तरभूतैः निगीर्णः स एव मंत्रसंचयस्तैत्तिरीय इत्याख्यातः।

विशंपवंशोद्भवत्वादयं वैशम्पायनः। पुराणपाठेषु दक्षोऽप्यासीदयम्। व्यासोऽपि महाभारतस्याद्यं रूपं 'जयम्' सर्वप्रथमं वैशम्पायनं श्रावितवान्। वैशम्पायनेन रचिता एते ग्रन्थाः समुपलभ्यन्ते–१-वैशम्पायनसंहिता, २-वैशम्पायननीतिसंग्रहः, ३-वैशम्पानयनस्मृतिः, ४-वैशम्पायनीतिप्रवेशिकान चेति।

राज्ञो जनमेजयस्य राजपुरोहितोऽप्यासीदयम्। जनमेजयं वैशम्पायन एव महाभारतं श्रावितवान्।

धृतराष्ट्रः—विचित्रवीर्यस्यासीज्ज्येष्ठोऽयं पुत्रः। व्यासस्य नियोगविधिना जातोऽयं जन्मान्ध आसीत्। एतस्य जन्मान्धत्वादेव कनिष्ठो भ्राता पाण्डुः कुरुवंशराज्याधिकारी नियुक्तः। एतस्य दुर्योधनादयः शतं पुत्रा आसन्। धृतराष्ट्रस्य चरित्रेऽशान्तिः, शंका, द्विधा, परावलम्बित्वं प्रत्ययनेयबुद्धिश्चेत्यादयो मानवसुलभाः न्यूनताः दृश्यन्ते। मृत्युभीतिभीतोऽयं सनत्सुजातेन महर्षिणा सम्यगुपदिश्य ब्रह्मविद्योपदेशपूर्णः कृतः।

सनत्सुजातीये दर्शने प्रदत्ता ज्ञानोपदेशाः गीतोपदेशवत् सारगर्भिता महत्त्वपूर्णा मननयोग्याश्च सन्ति।

'चातकप्रिया'ऽऽख्याभ्यां संस्कृत–हिन्दीव्याख्याभ्यामलंकृतमिदं सनत्सुजातीयं दर्शनं साम्बसदाशिवस्य महत्या कृपया पूर्णतामगात्। सतीस्वपि बह्वीषु टीकासु संस्कृत-हिन्दीनिबद्धासु मत्कृता चातकप्रियेति टीकाद्वयी देशिकैः छात्रैश्च भवेद्यदि समादृता, तदुपकारिणी स्वश्रमं सार्थकं कथयिष्यामि। ग्रन्थस्यास्य प्रकाशकः स्वनामधन्यो मन्मित्रं डॉ. श्रीविनोदरावः पाठकः त्यागसम्भृतार्थः सततमेव सफलार्थः स्यादिति विश्वनाथात् कामये। तत्रत्यौ मोहनकुमारनन्दकुमारौ भ्रातरौ सर्वदा स्वकार्यसिद्धौ प्रसन्नौ च स्ताम् इति शुभाशीः। अन्ये च सर्वेऽपि प्रकाशनकर्मकुशलाः सहयोगिनो मित्राण्यपि शतशो धन्यावादानाप्नुवन्त्विति। अन्तश्चानयाऽभ्यर्थनया विरमामि–

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः।।

विद्वत्सेवार्थी-
यमुनाराम त्रिपाठी

गणतन्त्रदिवसः
२००० ख्रिष्टाब्दः
चन्दौसीनगर्याम्

□

# प्रथमाध्यायस्य सारांशः

सनत्सुजातीयमिदं दर्शनं चतुर्ष्वध्यायेषु प्रसृतमस्ति। तत्र प्रथमेऽध्याये परमजिज्ञासुना महाराजधृतराष्ट्रेण शोकमोहग्रस्तत्वान्मृत्युविषयकः प्रश्नः कृतः। तत्पश्चात् ज्ञानिनां कृते कर्मानुष्ठानमावश्यकं न वेति, सृष्टिरचयिता कः धर्माधर्मयोः कस्य कृते प्राबल्यमित्येते प्रश्नाः पृष्टाः। महात्मा सनत्कुमारः क्रमिकरीत्या सर्वाण्युत्तराणि प्रस्तौति। तथाहि–

मृत्युनामकः कश्चिदपि पदार्थो व्यक्तिर्वा नास्ति। सहजब्रह्मभावात् प्रच्युतिः यो हि प्रमादः, स एव प्राणिनां मृत्युः। प्रमाद एव मोहरूपस्य मिथ्याज्ञानस्य निमित्तम्। स्वात्मतत्त्वस्यानवधारणं मृत्युरिति प्रतिफलति। केषाञ्चिन्मतेन मोहो मिथ्याज्ञानमन्येषां विचारेण च यमराज एव मृत्युरिति पक्षान् प्रस्तूय खण्डितः। प्रमाद एव केन प्रकारेण मृत्युरिति विवृणोति–अहंकारमूलोऽयं प्रमादः प्राणिना भास्यात् कामक्रोधादिरूपेणाभिव्यक्तः सन् विमार्गचरणेन स्वाभाविकात्मभावात् प्राणिनं प्रच्यावयति। तद्वशीभूताश्च ते कर्मप्रवृत्ताः जराजन्ममृत्युचक्रनिपतिताः सदर्थसम्बन्धाभावात् कदाचिदपि न विमुच्यन्ते। विषयध्यानात् कामः प्रजायते, कामस्यापूरणात् संजातः क्रोधः प्राणिनं प्रमत्तं कृत्वा नानाविधिना शरीरं विनाशयति। कामानुसारी कामपूर्तेरनन्तरं कामवह्निनश्यति। तदतिक्रम्याप्रमादी पापरहितो भूत्वा धैर्येण शोकसागरं तरति। कामानुसारिणां तु शरीरं नरक एव। तदाप्तिलालसोऽज्ञानी संसारकूपे पतति। एवं शरीर एव कामक्रोधादिरूपेण प्रमादाख्यो मृत्युर्निवसति। सर्वदा सच्चिदानन्दाद्वयात्मना वर्तमानो मनुष्यो मृत्युं विज्ञाय तस्मान्न विभेति तादृशञ्चात्मविदमवाप्य मृत्युरेव विनश्यति।

कर्म स्वर्गादिलोकसाधनभूतं कथ्यते। स्वर्गादिफलानुरागी चात्मज्ञानरहित एव जनः कर्मानुतिष्ठति। विद्वान् लौकिकं कर्मवत् क्षयिष्णु मत्वा काम्यनिषिद्धकर्मषु न प्रवर्तते। ब्रह्मात्मनावस्थितश्च स ब्रह्मैव भवति। ज्ञानी भवत्यावागमनविमुक्तः। अतो वेदेषु कर्मानुष्ठानव्यवस्थाज्ञानिनां कृते न विदुषे।

परमात्मा स्वयमेवास्ति स्वमायायोगेन सृष्टिकर्त्ता। स एवास्य जगतोऽभिन्नोपादान-निमित्तकारणम्। जीवोऽपि मायाबलेनैव परमात्मनः पृथग्भूत इव दृश्यते। जीवजगद्ब्रह्मणां पारस्परिको भेदः पारमार्थिको नास्ति। जीवो ब्रह्मैव नापरः। जगदिदमविद्याकल्पितं सद्ब्रह्मणि विभाति। व्यावहारिकप्रातिभासिकपदार्थेषु सत्स्वपि तंत्र तत्रानुस्यूतं ब्रह्म न वर्द्धते न वा क्षीयते। ब्रह्मातिरिक्तं सर्वं लब्धसत्ताकं वस्त्वविद्याकल्पितमिति।

अज्ञानिना विहितानां दुष्कृत्यानां सुकृत्यानां च प्रतिकूलमनुकूलं फलं पृथक् पृथक् भवति। दुष्कृतेन सुकृतं सुकृतेन च दुष्कृतं नोपशमितुं शक्यम्। प्रायश्चित्ते कर्मणि त्वन्यथाभवितुं शक्यते। विदुषानासक्तभावेनानुष्ठितेन पुण्येन पापं नश्यति भवति चान्तःकरणं परिष्कृतम्। योगिनः कृते गूढचर्या कर्त्तव्या किन्तु सांसारिकजनेषु समव्यवहारोऽपेक्षितः। स गूढाचरणशीलः जलान्नप्राचुर्ययुते स्थाने निवसेत्। जनं जडवदाचरेत्। राजस्वब्रह्मस्वानुपघातकादचौर्यात् सात्त्विकादन्नपानादिकं गृह्णीयात्।

अज्ञानी आत्मापहारी चौर एवास्ति। योगी मौनभावेन स्थितः स्यात्। सत्यार्जवदमाः शौचम् ह्रीरित्यादीनि षट् मानमोहविनाशकानि कथ्यन्ते। वस्तुतस्तु सन्त्येवातिदुष्क-राण्यात्मज्ञानसाधनानीति बहुविस्तारेणालनम्। ❑

## द्वितीयाध्यायस्य सारांशः

ग्रन्थस्यास्य द्वितीयेऽध्याये सनत्सुजातेन महर्षिणा समुपस्थापिता एते विषयाः– १- कीदृशं मौनम्? २-वेदाध्यायिनः पापावलिप्तता भवति न वेति, ३-वेदाध्ययनस्य कोपयोगिता?, ४-तपसः समृद्धता असमृद्धता च का? ५-ब्राह्मणस्य लक्षणं किञ्चेति तथान्येऽपि स्वल्पाः तदन्तर्गताः प्रश्नाः समाहिताः।

तत्र मनसा सह वाचो यमप्राप्य निवर्तन्ते सोऽवाङ्मनसगोचरः परमेश्वर एवास्ति मौनम्। तद्विषये वेदा एव प्रमाणम्। ऋगादयश्चत्वारो वेदाः पापाद्रक्षितुं न शक्ताः। प्रोत्पन्नपक्षः पक्षीव वेदाः स्वाध्यायिनं मरणबेलायां नीडमिव त्यजन्ति। वेदाः सकामकर्मासक्तानां जन्मजरादिजगतो न तारयिष्यन्ति। अतो वेदानां ब्रह्मण्येव

परमं तात्पर्यं वेदितव्यं नहि कर्मणि। कर्मोपासनादिवर्णनपरा वेदाः मनःशुचिताद्वारा चित्तैकाग्रतया च परे ब्रह्मण्येव स्वतात्पर्यं प्रकाशयन्ति। तदानन्तरं वेदानुष्ठानजन्य-पुण्येनानासक्तोऽनुष्ठाता जनः पापं प्रक्षाल्य प्राप्तब्रह्मात्मविज्ञानेन मोक्षमाप्नोति।

कर्मफलासक्तस्तु पुरुषः तज्जन्यपुण्येन स्वर्गादिलोकान्तरमवाप्य पुण्यक्षये पुनः मर्त्यलोकमेति, तस्य मोक्षो न भवति। अत एव ब्रह्मविदां तपांसि समृद्धानि। अन्येषां च भागेन क्षीणत्वात् तपांसि असमृद्धानि भवन्ति। यन्निष्कल्मषं तपः तदेव केवलं तप इत्युच्यते।

क्रोधकामलोभादयो द्वादश सन्ति तपोदोषाः। तत्कल्मषशब्देन व्यपदिश्यन्ते। संभोगसंवित्कार्पण्यादि सप्त नृशंसदोषाः उच्यन्ते। दोषैरेतैर्विमुक्तं तपो निष्कल्मषं भवति। ज्ञानं सत्यदमादयो द्वादश तपसो गुणाः।

दमस्यानृतपैशुनादयोऽष्टादश दोषा वर्णिताः। तद्दोषरहितो दमस्तपो गुणः। पुत्रधन-दानादयः षट् संख्याकाः त्यागाः सन्ति। तैस्त्यागैरष्टगुणयुक्तोऽप्रमादयुक्तो भवति। सत्यं, ध्यानं, समाधानं, जिज्ञासा, वैराग्यम्, आस्तेयः, ब्रह्मचर्यम्, असंग्रहश्चैतेऽष्टौ अप्रमादगुणाः सन्ति। एवञ्चोक्तैर्गुणैस्त्यागैश्च षड्भिर्युतं तपः समृद्धं भवति।

सुखी पुरुषः पञ्चेन्द्रियेभ्यस्तद्विषयेभ्यो रूपादिभ्यो मनसस्तद्विषयेभ्य, विषय-चिन्तनादिभ्योऽतीतानागतवर्तमानेभ्यो विमुक्तो भवेत्। ब्रह्मैवैकं सत्यम्। तद्विषयका-ज्ञानात् वेदाश्चतुर्विधा जाताः। विभेदोऽयं,वेदविषयकस्तद्विज्ञानायैव जातोऽतः सत्यमेव ब्रह्म तस्मिंश्चैव सर्वदेवप्रतिष्ठा। सत्यविदेवास्ति वेदवित्। स एव प्राज्ञः। वेदविस्तारस्तु सत्यज्ञानादिभ्यो जातः। अतो बहुपठन्तं न ब्राह्मणं विद्यात् स तु बहुवागुच्यते। सत्यब्रह्मात्मभावेनावस्थित एव ब्राह्मणो नान्य इति। केवलवेदज्ञस्तु वेद्यवेत्ता भवति नहि सत्यवेत्ता। न हि वेदेन वा ब्रह्म विद्यते। वेदेन साक्षात् सत्यं ब्रह्म नाभिधीयते। लक्षणया तु शाखाचन्द्रन्यायेन तद् वेदेनैवावगम्यते। अतो ब्राह्मणस्तं परमात्मानं वेदेनैव विजानीयात्, न तु विषयेषु पर्येषणं कुर्यात्। तूष्णींभूतः शान्तचित्तः श्रवणमननादिसाधनैः ब्रह्म साक्षात्कुर्यात्। ब्रह्मसाक्षात्कृदेव मुनि-शब्दार्थभाग्भवति न केवलमरण्यवसनान् मुनिरुच्यते। ब्रह्मविदेव सर्ववित्। व्याकुरुते च सर्वमिति वैयाकरणः। ☐

## तृतीयाध्यायस्य सारांशः

साध्यसाधननिरूपणात्मकस्तृतीयोऽध्यायः। साध्यं ब्रह्म, तत्प्राप्तिसाधनं चास्ति ब्रह्मचर्यादि। धृतराष्ट्रः पृच्छति, कीदृशं ब्रह्म? किंरूपम्-किमाश्रयञ्च तदिति। उत्तरं ददन् सनत्सुजातोऽब्रवीत्-सत्यज्ञानादिलक्षणं ब्रह्म प्रश्नप्रतिवचनाभ्यां नैव लभ्यम्। न वा बहुना श्रुतेन मेधया वाब्राह्म्या त्वरमाणेन पुरुषेण प्राप्यम्। ब्रह्म तु निगृहीतमनोबुद्ध्या दृढ्या लभ्यम्। सा च दृढधारणा ब्रह्मचर्येण लभ्या। ब्रह्मचर्यं चतुष्पादात्मकं भवति। तत्र गुरुसेवा तत्समीपोपसदनम् तत्प्रियं तदनुस्मरणम् च प्रथमः पादः। गुरुवत् गुरुपत्न्यां गुरुपुत्रेषु च व्यवहारः द्वितीयः पादः। आचार्यकृतात्मोद्धारस्मरणपूर्वकं तत्कृतज्ञताज्ञापनम्, स्वकृतार्थताज्ञानञ्चेति तृतीयः पादः। स्वप्राणधनादिदानेनापि मनोवाक्कायकर्मभिः गुरोः प्रियकरणं चतुर्थः पादः। ज्ञानसत्यादयो द्वादश गुणाः त्यागश्च षट् तत्परिपालनं बलञ्चैतत् सर्वं गुरोः संयोगेनैव फलतीति नियतमेव ब्रह्मचर्यमाचरणीयम्। मातापित्रोरपि बलवत्तरं गुरोर्महत्त्वम्। यतो हि मातापितरौ शरीरमेवोत्पादयतः। आचार्यात् प्राप्तजन्मा सत्यं भवति न पुनर्जायते जन्मलोके। अत एव गुरुं सर्वदा मानयेत्। न तस्मै कदाचिद् द्रुह्येत। एतेनैव ब्रह्मचर्येण देवत्वं देवाः, ऋषित्वं ऋषयः, रूपञ्च गन्धर्वाः प्राप्नुवन्। अतो ब्रह्मचर्यं वरीवर्ति। ब्रह्मचर्येण ब्रह्मविद्याऽऽप्यते, आत्मज्योतिश्च सम्पद्यते। कर्मणा ब्रह्म न लभ्यते। आत्मैव ब्रह्म निर्गुणं निराश्रयं निरूपं निर्विशेषञ्चास्ति। तद् ब्रह्म न पृथिव्यादौ वृत्तिमत्। अज्ञानतमसः परं व्यापकं सृष्ट्युत्पत्तिस्थितिप्रलयकालेऽपि सदानुवर्तमानं सद्रूपमणोरपि अणीयो महतोऽपि महीयः तद्भासैव सर्वमिदं भासमानं ब्रह्म स्वयंप्रकाशम्। तद् ब्रह्म ज्ञानयोगेनात्मविदेव पश्यति। तज्ज्ञानेनमरत्वमविद्याविनिवृत्तिरानन्दावाप्तिर्मोक्षो लभ्यते। ब्रह्मज्ञानं नाम 'अहम् ब्रह्मास्मी' ति सान्द्रमणिमयूखपदखण्डाकारमनोवृत्तिविशेष इति दिक्।

❑

# चतुर्थाध्यायस्य सारांशः

अध्यायेऽस्मिंश्चतुर्थे भगवान् सनत्सुजातो ब्रह्मणः स्वरूपं, तज्ज्ञानं, तत्फलं, तन्मूलां सृष्टिं, स्वात्मानुभवाश्चेत्यादिविषयान् प्रस्तौति। शुद्धं तदेव ब्रह्म सर्वत्र प्रकाशते। देवाः तदेव ब्रह्म समुपासते। सूर्यः तस्मादेव भासते। तच्च सजातीयविजातीयादिस्वगतभेदरहितमवाङ्मनसगोचरं निर्मलमनोऽवलोकितं चरमजम् अंगुष्ठमात्रपरिच्छिन्नं ब्रह्म योगिजनान् विहाय कोऽपि द्रष्टुं नास्ति समर्थः। गंगायां वीचिरिव निखिल एव प्रपंचः तस्मिन्नेव ब्रह्मणि जायते तिष्ठति लीयते च। तस्मादेव हिरण्यगर्भ उत्पद्यते। तस्मादेव पूर्णात् ब्रह्मणः पूर्णो जीवो जातः। तदेव ब्रह्म जीवात्मरूपेण जनानां हृदि प्रतिष्ठितं वर्तते। ज्ञानिनामिन्द्रियाणि विज्ञानसारथिनाधिष्ठितं तज्ज्ञानवन्तं पुरुषं शरीररथस्थं दिव्यममृतं लोकं बहन्ति। अज्ञानिनामिन्द्रियाणि निम्नगा इव स्वभावतः एव विषयविषपूर्णं संसारसागरं नयन्ति। संसारसिन्धौ निपतिता अपि जना ब्रह्मज्ञानरूपं पक्षमवाप्य पक्षिण इवोत्पतन्ति। इन्द्रियाणि च सर्ववत् इन्द्रियगोलकेषु वर्तमानानि विषयविषं दत्वा निलीयन्ते। यद्यपि साधनहीनेषु ससाधनेषु च तद् ब्रह्म समानम् तथापि ब्रह्मचर्यादिसाधनसहिता एव ब्रह्मानन्दरसं लभन्ते। ब्रह्मविदां कृतेऽग्निहोत्रादिकर्मणामपेक्षा नास्ति। यतः तत्फलस्य ज्ञाने एव समाप्तिर्भवति। ज्ञानी पुनर्जन्म न लभते। स तु विमुच्यत एव। मनोजवोऽपि सहस्रपक्षः सन् समुत्पतेत् तदपि तदनन्तमपारं ब्रह्म नाधिगच्छेत्। अचाक्षुषस्य तस्य परमेश्वरस्य साक्षात्कारं समिद्धसत्वा योगिन एव कुर्वन्ति। योगिनः सर्वात्मदर्शिनो भवन्ति। तेषु न भवन्ति मोहादयो भेदाः जुगुप्सा वा। सर्वत्रात्मदर्शिनां केषुचिदपि वस्तुषु वेदेषु वा किमपि प्रयोजनं नावतिष्ठति। महात्मा सनत्सुजातः स्वात्मानुभवं प्रदर्शयन्नाह– अहमेवास्मि माता, पिता, पुत्रश्च युष्माकम्। अहमेवास्मि प्रपितामहः पितामहश्च। विश्वमिदं मय्येवाश्रितम्। युष्मत्प्रतीतिगोचरा मयि एव कल्पिताः न तेष्वहं वृत्तिमान्। सुमना योगी मामेवाणुं महान्तं च ज्ञात्वाऽमृतो भवति। अहमेवास्मि ब्रह्मेति दिक्।

❑

# सनत्सुजातीयश्लोकानाम्

## अनुक्रमणिका

'न'



'प'



'ब'



'म'



'य'

□

# श्रीमत्सनत्सुजातीयदर्शनस्थानां विषयाणामनुक्रमः

## प्रथमाध्याये

## द्वितीयाध्याये

विषयाः पृष्ठानि



## तृतीयाध्याये

विषयाः पृष्ठानि



## चतुर्थाध्याये

।।श्रीः।।

# सनत्सुजातीयदर्शनम्

चातकप्रिया-संस्कृत-हिन्दीव्याख्याविभूषितम्

---

## अथ प्रथमोऽध्यायः

वैशम्पायन उवाच -

ततो राजा धृतराष्ट्रो मनीषी, सम्पूज्य वाक्यं विदुरेरितं तत्।
सनत्सुजातं रहिते महात्मा, पप्रच्छ बुद्धिं परमां बुभूषन्।।१।।

चातकप्रियाव्याख्यातुर्मङ्गलाचरणम्

व्याप्तं येन जगन्नितान्तमधुरं नामात्मरूपात्मकम्
स्थित्यादिष्वभिमानिना भगवता कालात्मना सर्वथा।
नानायत्नवतामपीषदपि नो विद्योतते नेत्रयो-
स्तस्मै दर्शनदर्शनाय मुदितादात्रे नमो ब्रह्मणे।।१।।

यो भीषयत्यनुपलं जगदेक एव
प्रामाणिकत्वमिह यस्य विविच्यते च।
मृत्युं तमेव निजदिव्यविभाविभूत्या-
निःशेषतां नयति यस्तमजं नमामि।।२।।

सनत्सुजातीयं दिव्यं दर्शनमात्मबोधदम्।
चातकप्रियया सम्यग्व्याख्यया प्रविभूष्यते।।३।।

सतीष्वनेकटीकासु व्याख्येयं यदि जायते।
विद्वत्परम्परा नूनं नव्यतापक्षपातिनी।।४।।

**अन्वयः**--ततः मनीषी महात्मा राजा धृतराष्ट्रः विदुरेरितं तत् वाक्यं सम्पूज्य रहिते परमां बुद्धिं बुभूषन् सनत्सुजातं पप्रच्छ।।१।।

**अवतरणिका**--"अथाजरोऽमरोऽमृतः, "तरति शोकमात्मवित्" "तेषामहं समुद्धर्ता मृत्युसंसारसागरात्", "मृत्युपरं पारमुपैति दिव्यम्", "तपसा ब्रह्मचर्येणामरत्वं प्राप्यते" इत्यादि श्रुतिस्मृत्यादिषूक्तानां वाक्यानां श्रवणात् "देवदत्तो मृतः" इति च लोके प्रत्यक्षदर्शनात् जायते जिज्ञासूनां हृदि जिज्ञासा यत् कोऽयं मृत्युः? किन्नामामरत्वम् ? कथञ्च भीषणान्मृत्योः परित्राणं केन चोपायेनामरत्वाप्तिरिति।

एवमेव महाभारतस्योद्योगाख्ये पर्वणि शोकमोहाभितप्तस्य कौरवपितुः महाराजधृतराष्ट्रस्य मानसे जिज्ञासा प्रादुरभवत्। स च "तरति शोकमात्मविदि"ति ब्रह्मविद्यां विना स्वशोकनिवारणमशक्यं मन्वानः

अनुक्तं यदि ते किञ्चिद्वाचा विदुर विद्यते।
तन्मे शुश्रूषवे ब्रूहि विचित्राणीह भाषसे।।

इति महात्मने विदुरायोक्तवान्। परमकारुणिको विदुरः सर्वज्ञः सन्नपि ब्रह्मविद्योपदेशे निजशूद्रयोनित्वं शास्त्रीयं प्रतिबन्धत्वं मन्वानो निजयोगशक्त्या परमर्षिं भगवन्तं सनत्सुजातमाहूय प्रत्युत्थानादिभिः तमभ्यर्च्य धृतराष्ट्रः सकलसंसारकारणधर्माधर्मवर्जितः सर्वदुःखातिगो यथा भवेत् तथोपदेष्टुं प्रार्थितवान्। वैशम्पायनो महर्षिः तत्कथां स्वयजमानं महाराजं जनमेजयं श्रावयन्नाह--तत इति।

**चातकप्रिया सं० व्याख्या**-ततः = श्रुतिस्मृतिपुराणादिषु निहितमात्मज्ञानोपदेशं विना शोकमोहयोः समूलोच्छेदोऽसम्भव इति निश्चित्य, मनीषी = मनषः ईषा मनीषा संदसद्विवेचिनी बुद्धिः, सा अस्यास्तीति मनीषी। "ईष्" धातुः ऐश्वर्ये गतिहिंसादर्शनेषु पठ्यते--सदसद्विवेकवान्। महात्मा = महान् आत्मा बुद्धिः यस्य सः, अथवा महः पूज्यः ऐश्वर्यवान् आत्मा स्वरूपं यस्य सः, महत्त्वञ्च समदर्शित्वम्, समदर्शिनी बुद्धिर्यस्य सः महात्मा इति विविधार्थः। राजा = राजते प्रकाशते

ऐश्वर्यादिभिरसावपराधीनसत्ताकः प्रभुः, धृतराष्ट्रः = एतन्नामा कुरुवंशीयः पुरुषः अथवा धृतं प्रजापालनधर्माचरणेन राष्ट्रं येनाऽसौ, रहिते = जनशून्ये प्रशान्तोपद्रवे आत्मज्ञानोपदेशानुकूले वातावरणे, परमाम्= परमात्मानमाम्नोतीति तां तादृशीं, बुद्धिं = पराविद्याम्, बुभूषन्= प्राप्तुमिच्छन्, विदुरेरितम् = विदुरेण ईरितं कथितं "सनत्सुजातो महात्मा त्वां ब्रह्मविद्योपदेक्ष्यति" इति स्वरूपात्मकं, तत् = पूर्वकाले कथितं, वाक्यम् = कथनम्, सम्पूज्य = हृदि निधाय सनसुजातञ्च विविधोपहारादिभिः सम्मान्य; सनत्सुजातम् = एतन्नामानं ब्रह्मणो मानसपुत्रं-सनत् सनातनं हिरण्यगर्भाख्यं ब्रह्म, तस्मात् सनातनात् ब्रह्मणो मानसात्, सु सुष्ठुः ज्ञानवैराग्यादियुक्तो जात इति सनत्सुजातः तम्, पप्रच्छ = सर्वतोभावेन पृष्टवान् इति।।१।।

विशेषः--अत्र श्लोके "परमां बुद्धिम्" इत्यनेन विषयः, "महात्मा बुभूषन्" इत्यनेन प्रयोजनम्, ब्रह्मप्राप्तिरेव फलं (प्रयोजनम्) मृत्युभय-मपास्येति, धृतराष्ट्रस्य विशेषणचतुष्टयेन (महात्मा, मनीषी, राजा, परमां बुद्धिं बुभूषन्) वेदान्ताधिकारित्वम्, प्रतिपाद्यप्रतिपादकभावसम्बन्धश्चेति अनुबन्धचतुष्टयमपि निरूपितमिति ज्ञेयम्।

चातकप्रिया हिन्दी व्याख्या--राजा जनमेजय को महाभारत की कथा सुनाते हुए महर्षि वैशम्पायन ने कहा कि हे राजन् ! "विना आत्मज्ञान के न तो आपका शोक-मोह समूल नष्ट होगा और न ही मृत्यु का भय जायगा।" महात्मा विदुर द्वारा कथित पूर्ववाक्य पर विश्वास करके महाराज धृतराष्ट्र ने एकान्त में स्थित उन्हें आत्मज्ञान का उपदेश करने के लिए आये हुए परमर्षि सनत्सुजात से पराविद्या प्राप्त करने की अभिलाषा से प्रश्न किया-।।१।।

धृतराष्ट्र उवाच-

सनत्सुजात यदिदं शृणोमि, मृत्युर्नास्तीति तवोपदेशम्।
देवासुरा आचरन् ब्रह्मचर्यम् अमृत्यवे तत् कतरं नु सत्यम्।।२।।

अन्वयः--सनत्सुजात यत् इदं शृणोमि हि मृत्युः न अस्ति इति तव उपदेशम् देवासुरा अमृत्येव ब्रह्मचर्यम् आचरन् तत् कतरन् नु सत्यम्।।२।।

चातकप्रिया सं० व्या०--धृतराष्ट्रः परमर्षिं सनत्सुजातं मृत्युविषयकं मतभेदयुतं प्रश्नं पृच्छति-सनत्सुजातेति। सनत्सुजात = हे महर्षे सनत्सुजात!, यत् इदं = शिष्यान् प्रति भवादृशैरात्मविद्भिरुपदिष्टम्, शृणोमि = निश्चयं विनापि परमुखात् गृह्णामि, हि = निश्चयेन, मृत्युः = तादृशः कोऽपि प्राणापहारको व्यक्तिविशेषः पदार्थविशेषो वा, नास्ति = न विद्यते कुत्रचिदपि भुवनेषु, इति तव = भवतः, उपदेशम् = विदुरादिभ्यः प्रदत्तम् प्रवचनम् । पुनश्च द्वितीयो वादः-देवासुराः = देवाः च असुराः च--इन्द्रविरोचनप्रभृतयः, अमृत्यवे = मृत्योरभावाय, ब्रह्मचर्यम् = वीर्य-संरक्षणं नियमसंयमव्रतादि, आचरन्=पालितवन्तः, तत्=तस्मात् कारणात् उभयोः प्रस्तुतपक्षयोः, कतरन् = कः, नु = निश्चयेन, सत्यम्= स्वीकार्यम्।

इदं तात्पर्यम्--"तद्धोभये देवा असुरा अनुबुबुधिरे" इत्याद्यारभ्य "तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः" इत्यन्तं यावदिन्द्रविरोचनयोः प्रजापतौ ब्रह्मचर्याचरणम् " पुनश्चेन्द्रस्य "एकाशतं ह वै वर्षाणि अथवा प्रजापतौ ब्रह्मचर्यमुवास" इति च। अपरा चापि श्रुतिः प्रतिपादयति-

न विरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता।।

एवं प्रमाणदर्शनेन प्रतिपादितं भवति यदस्ति मृत्युः यं विजित्या-मृतत्वमाप्यते, भवान् सनत्सुजातः (सनत् सर्वदा सुष्ठु जातं जन्म यस्य नित्यकुमारत्वेन जरामरणरहितः) कथयति--मृत्युर्नास्त्येव। एवं मृत्यु-सद्भावासद्भावयोः कः पक्षः स्वीकार्यः? भवान् तमेव पक्षं वक्तु-मर्हततीत्यभिप्रायः।।२।।

चातकप्रिया हिन्दी व्याख्या--मृत्यु के सम्बन्ध में पूर्णतया भयभीत धृतराष्ट्र तत्त्वज्ञानी महर्षि सनत्सुजात से पूछते हैं--हे सनत्सुजात! मैंने

आपके शिष्यों द्वारा सुना है कि जो मृत्यु संसार के समग्र प्राणियों को भयभीत करता है, वह मृत्यु आपके मत से न कोई व्यक्ति है और न ही कोई वस्तु। दूसरी ओर मैंने यह भी सुना है कि इन्द्र तथा विरोचन आदि देवता और असुर अमर होने हेतु सैकड़ों वर्षों तक ब्रह्मचर्य का नियमपूर्वक पालन करते हैं, जिसका कि श्रुतियों में वर्णन उपलब्ध होता है। अब प्रश्न उठता है कि जो वस्तु है ही नहीं, उसकी निवृत्ति के लिये प्रयत्न क्यों किया जाय? इस प्रकार मृत्यु को लेकर, उसके भाव और उसका सर्वथा अभाव से सम्बद्ध मेरे मन में घोर सन्देह पैदा हो गया है। अस्तु, आप सत्य का प्रतिपादन करें।।२।।

एवं पृष्टः प्राह भगवान् सनत्सुजातः-

*श्रीसनत्सुजात उवाच-*

अमृत्युः कर्मणा केचित् मृत्युर्नास्तीति चापरे।
शृणु मे ब्रुवतो राजन् यथैतन्मा विशंकिथाः।।३।।

अन्वयः--राजन् केचित् कर्मणा अमृत्युः अपरे च मृत्युः नास्ति इति। एतत् यथा मे ब्रुवतः शृणु, मा विशंकिथाः।।३।।

चातकप्रिया सं० व्या०--सनत्सुजातो धृतराष्ट्रेण पृष्टः प्राहराज़न् ! केचित् = अविद्याग्रस्ताः परमार्थतो मृत्योः सद्भावं स्वीकुर्वन्तः, कर्मणा= वेदप्रतिपादितेन नित्यनैमित्तिकादिना, अमृत्युः = अमरणं भवतीति मत्वा तदर्थे वेदविहितं कर्म कुर्वन्ति। अपरे च = अद्वितीयात्मदर्शिनः आत्मभिन्नं किमप्यपश्यन्तो मृत्युः नास्तीति कथयन्ति। विषयविषांधाः पुरुषास्तु निर्विषयं मोक्षमपि नेहमानाः कथयन्ति-

अपि वृन्दावने शून्ये शृगालत्वं स इच्छति।
न तु निर्विषयं मोक्षं कदाचिदपि गौतम।।इति।

एवम्। तर्हि द्वयोरेतयोः पक्षयोर्यथा न भवेत् विरोधः तथा यथार्थं ब्रुवतो मे मम वाक्यं शृणु। मत्कथने काचिदपि शङ्का न कार्या भवतेति।३।

**चातकप्रिया हिन्दी**--मृत्यु के "अस्ति-नास्ति" से सम्बद्ध धृतराष्ट्र के हृद्गत सन्देह को सुनने के बाद सनत्सुजात कहते हैं--हे राजन् ! मृत्यु के विषय में दो पक्ष हैं--प्रथम--कुछ लोग ऐसा मानते हैं कि मृत्यु है और वह वेदोक्त नित्य, नैमित्तिक तथा ब्रह्मचर्य आदि कर्मों के अनुष्ठान से दूर हो जाती है। द्वितीय--कुछ लोगों का मानना है कि मृत्यु नाम का कोई व्यक्ति या वस्तु ब्रह्माण्ड में कहीं है ही नहीं। अतः आप संदेहरहित होकर मेरे मुख से यथार्थ सुनो और धारण करो।।३।।

**उभे सत्ये क्षत्रियाद्यप्रवृत्ते मोहो मृत्युः सम्मतो यः कवीनाम्।**
**प्रमादं वै मृत्युमहं ब्रवीमि सदाऽप्रमादममृतत्वं ब्रवीमि।।४।।**

**अन्वयः**--क्षत्रिय आद्यप्रवृत्ते उभे सत्ये कवीनां यः सम्मतः मोहः मृत्युः। अहं प्रमादं वै मृत्युं ब्रवीमि, सदाऽप्रमादम् अमृतत्वं ब्रवीमि।।४।।

**चातकप्रिया सं०व्या०**--क्षत्रिय! = हे राजन् धृतराष्ट्र !, आद्यप्रवृत्ते= आद्यः = सर्गः तमारभ्य प्रवृत्ते = प्रवर्तिते, उभे=मृत्योः अस्तित्वमनस्तित्वञ्च, सत्ये = सत्यत्वेन स्वीक्रियेते। प्रश्नः समुदेति--केन प्रकारेण पुनर्द्वयोः परस्परविरोधिनोऽस्तित्वानस्तित्वयोः सत्यता तिष्ठति? तत्राह कवीनां= तत्त्वज्ञानिनां विदुषां, यः = पक्षः, सम्मतः = स्वीकृतः, स तु मोहः= मिथ्याज्ञानम् अनात्मपदार्थेषु आत्माभिमानः, मृत्युः = मरणम्। परन्त्वयं विरोधो मृत्योरस्तित्वविषयको नैवास्ति स्वीकार्यः। यतो हिं मृत्युः परमार्थरूपेण नास्ति। पुनश्चाहं (सनत्सुजातः) प्रमादं = स्वाभाविक-ब्रह्मभावात् जीवस्य प्रच्यवनम्, वै = निश्चयेन, मृत्युं = मरणं, ब्रवीमि= वच्मि। प्रमाद एवास्ति मिथ्याज्ञानस्य हेतुः, आत्मतत्त्वस्य सम्यगनव-धारणमेवास्ति तद्विषयकं घोरमज्ञानं जननमरणादिसर्वानर्थमूलं चेति। अत एव कथितः प्रमादो मृत्युः। तथा च सर्वदा = सततं, अप्रमादः= स्वाभाविकब्रह्मभावेऽवस्थानम्, अमृतत्वम्=अमरणम्,ब्रवीमि=समर्थयामि।

सनत्सुजातस्य सिद्धान्तमूलं श्रुत्यापि प्रतिपादितं भवति। यथा-"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते", इदं स्वरूपावस्थानमेवास्ति मोक्षपदम्। एवमेवानुगीतासु गीतम् "एको यज्ञो नास्ति ततो द्वितीयो यो हृच्छ्यस्तमहमनुब्रवीमीति।। "मृत्युर्वै तमः" इति श्रुतिः। स्मृतिश्च कथयति-"ज्ञानं सम्यगवेक्षणमिति।।४।।

चातकप्रिया हिन्दी--महर्षि सनत्सुजात कहते हैं कि हे राजन् धृतराष्ट्र! तुम दोनों पक्ष–मृत्यु है और मृत्यु नहीं है–सृष्टि के साथ ही पैदा हुआ समझो। अधिकारी के भेद से दोनों पक्ष (सिद्धान्त) सत्य हैं। कुछ विद्वान् ऐसे भी प्राप्त होते हैं, जिनके मत से मोह ही मृत्यु है। मोह अनात्म वस्तुओं–घट, पट, पुत्र आदि में आत्मा का अभिमान है। परन्तु मेरा मत इन सबसे भिन्न है। मैं प्रमाद को ही मृत्यु और निरन्तर अप्रमाद को ही अमरता मानता हूँ। प्रमाद अपने स्वाभाविक ब्रह्मभाव से हट कर सांसारिक वस्तुओं में अपने को लगा देना ही है। स्वाभाविक आत्मभाव से च्युत हो जाना ही अज्ञान का मूल है। अज्ञान सारे अनर्थों की जड़ है। अज्ञान का ही नाम मोह है। इसके दूर होने पर रज्जु में सर्प–भ्रम प्रतीति की भाँति ही, वास्तविक तत्त्वज्ञान प्रतिभासित हो उठता है।।४।

प्रमादो मृत्युः सदाप्रमादश्चामृत्युरिति कथमवगम्यते-आह-

प्रमादाद्वा असुराः पराभवन्<br>
अप्रमादाद् ब्रह्मभूताः सुराश्च।<br>
न वै मृत्युर्व्याघ्र इवात्ति जन्तून्<br>
नाप्यस्य रूपमुपलभ्यते हि।।५।।

अन्वयः--वा प्रमाद्यत् असुराः पराभवन् अप्रमादात् च सुराः ब्रह्मभूताः। मृत्युः वै व्याघ्र इव जन्तून् न अत्ति, न अपि अस्य रूपम् उपलभ्यते हि।।५।।

**चातकप्रिया सं० व्याख्या**--वा = यतः, प्रमादात् = देहाद्यवस्तुनि आत्मभावात् , असुराः = विरोचनादयः, पराभवन् = पराजयं प्राप्ताः। यथोक्तम् -श्रुतौ-"अनुपलभ्यात्मानम् .........देवा वा असुरा वा ते पराभविष्यन्ति।" च = तथा, अप्रमादात् = स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मनावस्थानात्, सुराः = देवा इन्द्रादयः, ब्रह्मभूताः ब्रह्मभावमधिगताः। अत्र श्रुतिः प्रमाणयति-"तं देवा आत्मानमुपासते तस्मात् तेषां च सर्वे च लोका आप्ताः सर्वे च कामाः" इत्यादिना। असुर इत्यस्य शब्दस्यार्थ एवमपि-"असुषु प्राणेषु इन्द्रियेषु रमते इत्यसुरः। अतोऽनात्मविदो विषयसंसक्ताः प्राणिनोऽसुराः। त एतादृशा स्वस्वाभाविकं ब्रह्मभावमतिक्रम्य अनात्मनि देहाद्यवस्तुन्यात्मभावमापन्नाः, पराभवन्= तिर्यगादियोनिषु जन्म प्राप्ताः, अप्रमादात् = सततं ब्रह्मणि स्थितत्वात्, च, सुराः = आत्मविदः पुरुषाः, ब्रह्मभूताः = निवृत्तमिथ्याज्ञानतत्कार्याः ब्रह्मैव अभूवन्। यथोक्तं बह्वृचब्राह्मणोपनिषदि-

"तस्मान्न प्रमाद्येत नातीयात्" इति। सुराः--के?-

"आत्मन्येव रतिर्येषां स्वस्मिन् ब्रह्मणि चाचले।

ते सुरा इति विख्याताः सूरयश्च सुरा मताः।।"इति च।।

ब्रह्मैव सन् ब्रह्माप्येति श्रुतिः। लोकेऽस्मिन् सर्वजन्तूनां संहारकः कश्चिदन्य एव मृत्युः ख्यातः। कथं तर्हि भवान् व्याहरति "प्रमादं वै मृत्युमहं ब्रवीमीत्यस्योत्तरं "न वै मृत्युरिति। मृत्युः, जन्तून् = प्राणिनः, न वै, अत्ति = खादति, खादेच्चेत् रूपमपि मृत्योर्व्याघ्र इवोपलभ्येत, न चोपलब्धो भवति। मृत्योः कार्यमेव दृश्यते, न हि स्वरूपं प्राप्यते। तस्मान्नास्ति मृत्युः।।५।।

**चातकप्रिया हिन्दी व्याख्या**--इस श्लोक में श्री सनत्सुजात अपने द्वारा प्रतिपादित--प्रमाद मृत्यु है और अप्रमाद अमरत्व है--इस स्वकीय विचार की पुष्टि में प्राक् दृष्टान्त का सहारा लेते हुए कहते हैं कि इतिहास साक्षी है कि प्रमाद अर्थात् अज्ञान के कारण ही असुरगण

काम, क्रोध आदि आसुरी वृत्तियों से आक्रान्त हो कर देवताओं से पराजित ही नहीं हुए, अपितु उनका शरीर भी नष्ट हो गया। जबकि दूसरी ओर अप्रमाद अर्थात् आत्मज्ञान के कारण देवगण शम-दम आदि से सम्पन्न होकर ब्रह्मत्व को प्राप्त हुए। चूँकि मृत्यु का कोई भी अपना स्वरूप प्राप्त नहीं होता, अतः वह व्याघ्र आदि के समान सशरीर प्रत्यक्ष होकर प्राणियों का भक्षण नहीं करती।

वेद में यह वृत्तान्त आता है कि असुरराज विरोचन और देवराज इन्द्र--दोनों ब्रह्मा के समीप गये, परन्तु ब्रह्मा के प्रवचन का अर्थ विरोचन ने प्रमादवश देहात्म ग्रहण किया, जबकि इन्द्र उसी प्रवचन से तत्त्वज्ञान की प्राप्ति कर कृतार्थ हो गये। अज्ञान प्राणियों को जन्म--मृत्युरूपात्मक संसार--चक्र में डालता है। अज्ञान का कोई स्वरूप दृष्टिगोचर न होकर वह केवल अपने कार्यों से जाना जाता है। रस्सी में सर्प का भ्रम होता है, किन्तु वहाँ भी अज्ञान सर्प के रूप में दिखायी नहीं पड़ता। इसीलिये कहते हैं कि मृत्यु व्याघ्र आदि के सदृश प्राणियों को अपना ग्रास नहीं बनाती, क्योंकि मृत्यु का स्वरूप अनुपलब्ध है। इस प्रकार निष्कर्ष यह निकला कि अज्ञान की निवृत्ति हो जाने से जो आत्मस्वरूप में स्थित हैं, वे सुर हैं और इसके विपरीत निरन्तर देहात्म भाव में अवस्थित रहने वाले असुर हैं--जिनके शरीर का विनाश निश्चित है।।५।।

महाभारते सावित्र्युपाख्याने मृत्योः स्वरूपमित्थं वर्णितम् -

"अथ सत्यवतः कायात् पाशबद्धं वशंगतम्।
अंगुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्।।"

तर्हि कथं स्वरूपाभावः? अयमेव प्रश्न समुपस्थाप्यतेः।-

यमं त्वेके मृत्युमतोऽन्यमाहु-
रात्मावासममृतं ब्रह्मचर्यम्।

पितृलोके राज्यमनुशास्ति देवः
शिवः शिवानामशिवोऽशिवानाम्।।६।।

**अन्वयः**--एके तु अतः अन्यं यमं मृत्युम् आहुः। देवः (यमः) पितृलोके आत्मावासम् अमृतं ब्रह्मचर्यं राज्यम् अनुशास्ति। (स च) शिवानाम् शिवः, अशिवानाम् अशिवः (अस्ति)।।६।।

**चातकप्रिया सं० व्या०**--मृत्योः स्वरूपं व्याघ्ररूपमिव कुत्रापि नोपलभ्यत इत्याह तत्कथनमाक्षिपन्–एके = पुराणपारङ्गताः, तु = स्वमान्यतानुसारम्, अतः = अस्मात् प्रमादरूपात् मोहरूपाद् वा, अन्यम् = भिन्नम्, यमम्= यम्यते नियम्यतेऽनेनेति देवविशेषं, मृत्युम् = मरणम्, आहुः = कथयामासुः। यथा-यमयतीति यमो धर्मराजो विवस्वतस्तनूजः कालः आज्ञा प्रतीक्षमृत्युरमोघपितामहाज्ञारूपः कालदण्डः पाशहस्तो रौद्रः प्रभुरिन्द्रादीनां देवानामन्यतमो दक्षिणाशेषः, आत्मावासं = आत्मनि प्राणिनां बुद्धौ आवासः स्थितिर्यस्य सः तम्, स च देवः, पितृलोके= यमलोके दक्षिणदिशि प्रतिष्ठिते राज्यं प्राणिनां तत्कर्मानुसारं फलप्रदानं, अनुशास्ति = करोति। एतस्मादेव शिवानां = सत्कर्मिणां, शिव= कल्याणप्रदः, अशिवानां = दुष्कर्मकर्तॄणां, अशिवः = दुःखदः।

**अयमत्र विशेषः**--अत्र "यमः", "मृत्युः", "ब्रह्मचर्यम्", "अमृतम्", "आत्मावासः" इत्येतेषां मन्त्रस्थशब्दानां सविशेषं तात्पर्यमुच्यते- नियमनसर्वोपसंहरणस्वरूपा परमेश्वरस्य विशिष्टा शक्तिरेव "यमः" स चैव मृत्युरिति। "ब्रह्मचर्यम्" इत्यपि शब्दोऽमृतधर्माणां ब्रह्मणि चर्या सेवा निष्ठा वा यस्य, सः तमिति व्युत्पत्त्या यममेव सङ्केतयति। तादृशश्च स "यमः" आत्मावासः। तत्कथमित्युपपाद्यते–मृत्युः कस्यचित् पदार्थस्य तात्कालिकरूपविनाशः, स च परिणामः स्वोत्तरावस्थान्तरोपलब्धिः, सैवोत्पत्तिरपि। पदार्थस्य परिणामस्त्वेक एव, परन्तु स्वस्योत्तरापेक्षयोत्पत्तिः कथ्यते स्वस्य पूर्वावस्थापेक्षया च विनाशः इत्युच्यते। चराचर-

पदार्थनिष्ठौ चोत्पत्तिविनाशावेतौ कालसापेक्षौ। शरीरिणां शरीरस्य कर्मभोगार्थं प्रारम्भः प्राक्सम्बन्धः उत्पत्तिः, चरमक्षणवियोगश्च मृत्युरुच्यते। स्थूलप्राणसंगमो जीवनं तत्त्यागश्च लोके मृत्युरिति कथ्यते। अत एव सूक्ष्मशरीरे सूक्ष्मप्राणसम्बन्धेऽपि न कापि हानिः। अथवा अनादि-कर्मवशात् संहतसूक्ष्मशरीरस्य प्रारब्धकर्मपरिणामवशात् भोगार्थं पाञ्च-भौतिकशरीरादेः प्राक्सम्बन्धो जन्म तत्परित्यागश्च मरणमिति। एवञ्च तद् द्वयमपि कर्मणां संस्काररूपेण मनसि स्थितत्वात् आत्मस्थमेव भवति, कर्मफलस्य सुखदुःखादेरपि तत्र स्थितत्वात् प्रारब्धविनाशस्यापि मनसि स्थितिः। अत्रात्मशब्दः अन्तकरणवाचकः। एवं यमस्य आत्मावास-त्वमुचितं तिष्ठति। सर्वं कालसापेक्षमतः कालस्याप्यात्मवासत्वमुपपन्नं भवति।

यमश्चायं पितृलोके राज्यमनुशास्ति। अयमाशयः—आत्मनि (अन्तःकरणे) कालरूपेण निवसन्नपि कर्मशीलानां पितृलोकनाम्ना प्रसिद्धे दिव्ये जगति प्राणिनामनुशासनं करोति। संसार एव पितृलोकः, पित्रोः शरीरप्रभवत्वात्। नानारमणीयवस्तुयुतत्वाच्चायं संसारः दीप्तिमान्। कालश्च सुखे वा दुःखे वा यथानिश्चितं युनक्ति वियुनक्ति।

अथवा लोक्यते उपभुज्यते विषयभोगः अनेनेति शरीरमेव लोकः। अयञ्च कालो यमो वा सर्वेषां कर्मिणां शरीरे तिष्ठति। केवलं कर्मणामीष्ट-पूर्तादीनामुपासकाः धूमादिद्वारा पितृयानेन (मार्गेण) पितृलोकं चन्द्र-मण्डलमारोहन्ति। धर्मराजः तत्कर्मानुरूपं तत्र फलं प्रयच्छति। एवञ्च कर्मकर्त्तृणां फलप्रदानार्थं नियतानां यमदूतादीनां भोगयोगसाधन-भूतशरीराणाञ्चोपरि शासनं करोति। शासनसमयश्च सुनिश्चितः। देवश्चायं यमः सावित्र्याद्युपाख्याने महाभारतादौ प्रसिद्धः। रामायणेऽपि यमरावणसंवादो दृश्यते।

एवं मतान्तरेण प्रमादो मोहो यमश्चेति रूपत्रयात्मको मृत्युरुक्तः। तत्र प्रमाद एव मोहयमयोरपि बीजम्। स्वस्वरूपात्प्रच्युतिरेव मोहद्वारा

सर्वानर्थमूलम्। प्रमादानन्तरं मोहादेवानात्मनि देहादौ आत्मभावादेव यमयातनोपलब्धिरिति मृत्युविषय को विचारः।

यमो मृत्युरिति पक्षे तु अमृतत्वं ब्रह्मचर्यमित्युक्तम्। तच्च यमलोकप्राप्तिप्रतिकूलस्वर्गप्राप्त्यनुकूलवेदप्रतिपादितकर्मानुष्ठानमुपस्थसंयमश्च। तथाहि-छान्दोग्ये-"अथ यत् यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत् अथ यदिष्टमिति..........। अथ यत् सत्रायणमित्याचक्षते ब्रह्मचर्यमेव तदित्यादि। एवञ्च ब्रह्मचर्यमेवामृतत्त्वम् "ब्रह्मचर्येण ह्येष्टमात्मानमनुविन्दते। तत्र चेष्टपूर्तसत्रयज्ञमौनोपवासारण्यवासादीनां ब्रह्मचर्यत्वोक्तेः। तस्य चात्मानुविन्दनमेव फलम्।

**सारांशः**--प्राक्कथितं सर्वमेकीकृत्य वक्तुं शक्यते यत् प्रमादो मृत्युरप्रमादोऽमृतत्वम्। मोहो मृत्युरमोहोऽमृतत्वम्, यमो मृत्यु-र्ब्रह्मचर्यममृतत्वम्। अत्र ब्रह्मचर्यस्य चाप्रमादसाधकत्वादविरोधः। मृत्योरभावपक्षे-प्रमादो मृत्युरिति मतेन सनत्सुजातेनोपपादितः। कर्मणा मृत्युरिति पक्षोऽपि ब्रह्मचर्यममृतमिति प्रतिपादितः। यद्यपि कर्मणा नास्त्यमृत्युः। तथापि येषामपि यम एव मृत्युः तेषां मते यमयातनायाः अप्राप्ति-साधककर्मणैव अमृत्युरित्याशयः।।६।।

**चातकप्रिया हिन्दी व्याख्या**--सनत्सुजात अपने पूर्ववर्तियों का मत प्रस्तुत करते हुए कहते हैं कि कुछ विद्वान् हमारे द्वारा प्रतिपादित प्रमाद के अतिरिक्त "यम" को ही मृत्यु कहते हैं। उनके अनुसार आत्मा से सम्बद्ध ब्रह्मचर्य का पालन ही अमरत्व है। वह यम पुण्यात्माओं के लिए कल्याणकारी और पापियों के लिए अमङ्गलमय हैं तथा पितृलोक में रहते हुए भी सम्पूर्ण जगत् का शासन करते हैं।

आशय यह है कि विद्वानों की दृष्टि में अज्ञान से भिन्न मृत्युसंज्ञक कोई अन्य तत्त्व नहीं है, किन्तु अज्ञान अमूर्त होने से कार्यमात्र से अनुगमित होता है। अतः अज्ञानी जन "यम" नामक देवता को ही मृत्यु के रूप में स्वीकार करते हैं, जबकि तत्त्व दृष्टि से ऐसा कुछ भी नहीं है।।६।।

आस्यादेष निःसरते नराणां
क्रोधः प्रमादो मोहरूपश्च मृत्युः।
अहङ्गतेनैव चरन् विमार्गान्
न चात्मनो योगमुपैति कश्चित्।।७।।

**अन्वयः**--क्रोधः प्रमादः च मोहरूपः एषः मृत्युः नराणाम् आस्यात् निःसरते। (अतः) अहंगते एव विमार्गान् चरन् आत्मनः किश्चित् योगं न उपैति।।७।।

**चातकप्रिया सं० व्या०**--पूर्वश्लोके मृत्युस्वरूपमाभाष्य सम्प्रति प्रमादस्य प्रवृत्तिं फलञ्चोच्यते--आस्यादेष इति।। एषः = प्रमादरूपो मृत्युः सहजब्रह्मभावप्रच्युतिरूपः, नराणाम्=प्राणिनाम्, आस्यात् = अहंकारात् मुखात्। असु प्रक्षेपणे इत्यस्माद्धातोः अस्यतेऽनेन अस्यति वा आस्यम्। अस्यति=प्रक्षिपति शरीरादौ आत्मानमिति आस्यमभिमानः कामो वा।

**इत्थं चोत्पत्तिक्रमः**--तस्मात् आस्यात् = अभिमानात् कामः, तस्मात् कामात् क्रोधः, कोधाच्च प्रमादो मोहाख्यः जायते। प्रमादस्यैव अहमित्याकारमभिमानः तत्पश्चाच्च कामः संकल्पः अहम् अशनायावान् इत्यादिरूपम्। कामः प्रधावितः सन् क्रोधरूपो भवति। प्रमादश्च मोहलक्षण इति। चकाराच्च स्मृतिभ्रंशादेः संग्रहः। एष एव क्रोधः कामः मोहरूपेण प्रमादाख्यो मृत्युः नराणां अहंकारात् निःसरते प्रवर्तते। गीतायामप्युक्तं श्रीकृष्णेन-

ध्यायतो विषयान् पुंसः संगस्तेषूपजायते।
संगात् संजायते कामः कामात् क्रोधोऽभिजायते।।
क्रोधात् भवति संमोहः संमोहात् स्मृतिविभ्रमः।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति।।

नेदमेव पापमूलमपि कामक्रोधावेव-

काम एषः क्रोध एष रजोगुणसमुद्भवः।

महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्।

तत्र मोक्षमूलकत्वात् "अहं ब्रह्मास्मीति" वेदान्तोक्तब्रह्मात्मैक्य-प्रतिपादकवाक्यानुभवो नास्त्यभिमानः। तद्विपरीतम् – अहं स्थूलः कृशः इत्यादि तु बन्धमूलत्वात् त्याज्योऽभिमानः। अहमित्यत्रान्तः-करणविषयता पूर्वं जायते, ब्रह्मणि च प्रमादानन्तरं जायते। प्रमादात् पूर्वं प्रमुखश्च महान् हानिदोऽहंकारः, स च ब्रह्मणि अहंविषयता,तत्पश्चाच्च कामादीनामनर्थानामुद्भवः। अतोऽत्र कथितमास्यादेष इति। एवञ्च प्रमादग्रस्तः पुमान् अहंगतेनैव ब्रह्मणि अहन्त्वारोपणेनैवं परिच्छिन्नान्तः-करणाभिधानानुकूलाहंपदेनापरिच्छिन्नाविषयात्मनो विषयतापादनेनैव एवकारेण अहंकारातिरिक्तस्येतरस्य हेतुत्वं निरस्यति। अथवा कुमार्गा-चरणेऽन्ययोगमेवकारेण व्यवच्छिनत्ति। विमार्गान् निषिद्धकर्माणि ब्रह्महननादीनि चरन्।

के च विमार्गाः? ज्ञानातिरिक्तानि विहिताविहितानि सर्वाणि कार्याणि पितृलोकसाधकत्वात् उपासनायुतानि तानि, ब्रह्मलोकसाधकत्वात् आत्मनश्चाबाधकत्वात् विमार्गाः। उपासनासहितानि तानि केवलकर्माणि चरन् अहंगतेन गतं ज्ञानं, तच्च भावना मनोवृत्तिः। अहंभावश्च-अहमस्य कर्त्ता, भोक्ता, ममेदं शरीरं, धनं, गृहम् इत्येवंरूपेण इष्टापूर्तादिकं सोपासनं निरुपासनं वा कुर्वन् स्वल्पमपि आत्मनः स्वस्वरूपस्य योगं प्राप्तिं-नित्यप्राप्तस्यात्मनोऽविद्यानिवृत्तिरूपां न उपैति गच्छति प्रमादरूपाया अविद्यायाः विद्यमानत्वात्। यथा शुक्तिकायां रजतं मन्यमानस्य ईषदपि वास्तविकरजतेन संयोगो भवति तथैव। एवं यावदारोपितवस्तुभानं तावदधिष्ठानस्यात्मनः स्वरूपोपलब्धिर्नास्तीति। प्रमादी पुरुषः कोटिजन्म-भिरपि नाप्नोत्यात्मनो रूपमतः प्रमादरूपस्य मृत्योरतिक्रमणमुक्तमा-चार्येणेति।।७।।

**चातकप्रिया हिन्दी व्या०**--छठें श्लोक में मृत्युस्वरूप निर्धारित करने के पश्चात् आचार्य इस सप्तमश्लोक में प्रमादाख्य मृत्यु का कार्य

के रूप में अवस्थान दर्शाते हुए कहते हैं कि यह क्रोध, प्रमाद (अज्ञान) और मोहरूपी मृत्यु प्राणियों के अहंकाररूपी मुख से यथासमय बाहर कार्यरूप में व्यक्त होता रहता है। प्राणी–समुदाय, विशेषकर मनुष्य अपने अन्तःकरण में स्थित अहंकार आदि के वशीभूत होकर ही स्वरूपज्ञान से भिन्न श्रुति–स्मृति में विहित कर्मों का आचरण करता है, जिसके परिणामस्वरूप जीव स्वपरमात्मस्वरूप को रंच मात्र भी प्राप्त नहीं कर पाता। अज्ञान के कारण देहाभिमानी पुरुष यावज्जीवन इन्द्रियों के सुखार्थ यत्न करता रहता है। यत्न विफल होने पर इच्छाओं की पूर्ति में बाधा आती है, जिससे कि क्रोध पैदा होता है। यह क्रोध ही जीव को स्वाभाविक ब्रह्मात्मभाव से विचलित कर अन्ततः शरीरादि के विनाश का कारण बनता है, जहाँ मोह-अज्ञान का वशवर्तित्व प्राधान्येन दृष्टिगोचर होता है।।७।।

ते मोहितास्तद्वशे वर्तमानाः

अतः प्रेतास्तत्र पुनः पतन्ति।

ततस्तं देवा अनुपरिप्लवन्ते

अतो मृत्युं मरणादभ्युपैति।।८।।

**अन्वयः**--ते मोहिताः तद्वशे वर्तमानाः अतः प्रेताः पुनः तत्र पतन्ति। ततः तं देवाः अनुपरिप्लवन्ते अतः मरणात् मृत्युम् अभ्युपैति।।८।।

**चातकप्रिया सं० व्या०**--ते = मनुष्याः, मोहिताः = अहंकारादिस्वरूपात्मकेन अन्तःकरणस्थितेन अज्ञानेन शरीरेन्द्रियाद्यात्मभावं प्राप्ताः, तद्वशे = अहंकारक्रोधादिरूपस्य प्रमादनाम्नः मृत्योर्वशे, वर्तमानाः = स्थिताः, सन्तः, अतः = अस्माल्लोकात् देहाद्वा, प्रेताः = धूमदियानेन गताः, तत्र = यमलोके यावत्पुनःपतनमुषित्वा, पुनः = भूयोभूयः आकाशादिक्रमेण शरीरग्रहणाय, पतन्ति = गच्छन्ति, नरकादिषु स्थानेषु इति शेषः। यथोक्तम्–"तस्मिन् यावत्सम्पातमुषित्वाऽथैनमेवाध्वानं

पुनर्निवर्तन्ते।" ततः = अनन्तरम्, शरीरग्रहणावस्थायाम्, तम् = नरं जीवं वा, देवाः = चक्षुराद्यधिष्ठातृदेवाः, इन्द्रियाण्यनुसृत्य कर्माणि, परि = समन्तात्, प्लवंते = परिवर्तन्ते, तत्रैव गच्छन्ति। यथेयं श्रुतिः- "तमुत्क्रामन्तं प्राणोऽनुत्क्रामति प्राणमनुत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति।" अतः= अस्मात् कारणात्, इन्द्रियगुणानुसरणान्, मृत्युं = मरणसंज्ञाम्, मरणात्= अत्यन्तविस्मृतेः अज्ञानाद्वा, अभ्युपैति = याति। मरणाज्जन्म, ततश्च मरणम्। एवं जन्ममरणव्यवस्थावद्धोऽयं जीवः न कदाचिन्मुक्तिं लभते। **अयमाशयः**--"मृत्युरत्यन्तविस्मृतिः" इति स्मृतिवचनात् अज्ञानं प्रत्यगानन्दविस्मारकत्वेन यमश्च प्रत्यक्त्वेन गृहीतस्य देवस्य विस्मरणेनोभयमपि मृत्युसंज्ञितम्। तत्र च प्रमुखो मृत्युरज्ञानं, यमश्च गौणः। तथा च आत्मविषयकाज्ञानकारणत्वात् संसारस्य, परामात्मानं यावन्न वेत्ति साक्षादात्मत्वेन तावदयं जीवः तापत्रयाभिभूतः रागद्वेषादिभिश्च समाकृष्यमाणोऽवतिष्ठते शश्वन् मोमुह्यमान इति।।८।।

**चातकप्रिया हिन्दी व्याख्या**--आत्मज्ञान से रहित साधारण मनुष्य की दशा का वर्णन करते हुए कहते हैं--साधारण मनुष्य कामादि की मनोरमता से आकृष्ट और अनुरक्त होकर उसी की क्षणिक पूर्ति में तृप्ति मानते हुए इस लोक में मर कर पुनः--पुनः इसी लोक में जन्म लेते हैं। मृत्यु के वाद उस जीव के मन, इन्द्रिय और प्राण आदि भी साथ जाते हैं। इस प्रकार जन्म--मरणरूप संसार--चक्र से कभी मुक्ति नहीं होती। प्रमादरूपी अज्ञान के दूर होने पर ही आवागमनरूप संसार चक्र से छुटकारा मिलता है- ऐसा सनत्सुजात का मत है।।८।।

**कर्मोदये कर्मफलानुरागाः**
**तत्रानुयान्ति न तरन्ति मृत्युम्।**
**सदर्थयोगानवगमात् समन्तात्**
**प्रवर्तते भोगयोगेन देही।।९।।**

अन्वयः--कर्मोदये कर्मफलानुरागाः तत्र अनुयान्ति। मृत्युं न तरन्तिं। सदर्थयोगानवगमात् भोगयोगेन देही समन्तात् प्रवर्तते।।९।।

चातकप्रिया सं० व्या०--कर्मणां बन्धहेतुत्वमुच्यते--पूर्वं तु कर्मणा अमृतत्वं भवतीति यदुक्तं तन्निराकरोति। कर्मोदये = कर्मणां काम्यानां प्रारम्भे सति, कर्मफलानुरागाः = कर्मफलेष्वासक्तचित्ताः, सन्तः, तत्र= तस्मिन्नेव कर्मफलाभिलाषे फलभोगाय प्राप्तलोके वा, अनुयान्ति = अनुगच्छन्ति। पुनश्च वर्तमानं देहं त्यक्त्वा प्रारब्धकर्मभोगार्थं शरीरान्तर- माप्नुवन्ति संसारचक्रमाप्नुवन्ति, अतः मृत्युम्=प्रमादमज्ञानं वा, न तरन्ति= पारयन्ति। ननु कर्मोदये कर्मफलानुरागाः पुनः प्रयान्तु लोकाल्लोकान्तरं किन्तु मृत्युतरणाभावे को हेतुरित्याह--सदर्थयोगानवगमात् = सत् परं ब्रह्म = स चासौ अर्थः सदर्थः, तस्य योगः साक्षादनुभवः अथवा योगः अष्टाङ्गयोगः यमादिः, तस्य अनवगमात् अप्राप्तेः स्वरूपसाक्षात्कारा- भावादित्यर्थः, समन्तात् = चतुर्दशभुवनेषु चतुरशीतिलक्षयोनिषु, देही= दिह उपचये इत्यस्मात् दिह्यते उपचीयते असौ इति देहः भोगायतनं शरीरम्, स अस्यास्तीति देही, आत्मा, भोगयोगेन = विषयानन्दबुद्ध्या, प्रवर्तते = संसरतीति विषयाकांक्षया दृष्टिहीन इव। कर्मैव बन्धः तेनाबद्धो जीवो भ्रमति। यथोक्तम् -"प्लवा ह्येते अदृढा यज्ञरूपाः, अष्टादशोक्तमवरं येषु कर्म। मोक्षदा तु ब्रह्मविद्यैव, सदर्थयोगशब्देन सैवोक्ता। यथा-

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्येऽनुसंयान्ति यथाकर्म यथाश्रुतम्।।

अतः कर्मणा न हि मृत्युजयोऽपि त्वमृत्युरेव।।९।।

चातकप्रिया हिन्दी व्याख्या--पहिले "अमृत्युः कर्मणा" जो कहा गया था, उसका निराकरण प्रस्तुत श्लोक द्वारा करते हुए कहते हैं कि जब प्रारब्ध कर्म का भोग आरम्भ हो जाता है तब जीव कर्म के फल में ही आसक्ति रखने के कारण वर्तमान शरीर का परित्याग करके पुनः फल भोगने के लिए चौदहों भुवनों में व्याप्त भिन्न-

भिन्न शरीर को प्राप्त करता रहता है। वह मृत्यु-जन्ममय संसार-चक्र से मुक्त नहीं हो पाता। संसार-चक्र में फँसे होने का एकमात्र कारण देहाभिमानी जीव का परमात्मत्त्वत् के साक्षात्कार का अभाव है। कर्म से नहीं, अपितु आत्मज्ञान से ही जन्म-मरण से मुक्ति मिलती है, जैसाकि श्रुतिं का कथन है-"न कर्मणा न प्रजया त्यागेनैकेन अमृतत्वमाहुः"।।९।

तद् वै महामोहनमिन्द्रियाणां
मिथ्यार्थयोगेऽस्य गतिर्हि नित्या।
मिथ्यार्थयोगाभिहतान्तरात्मा
स्मरन्नुपास्ते विषयान् समन्तात्।।१०।।

अन्वयः-तद् वै इन्द्रियाणां महामोहनं हि अस्य मिथ्यार्थयोगे गतिःनित्या। मिथ्यार्थयोगाभिहतान्तरात्मा समन्तात् विषयान् स्मरन् उपास्ते।१०।

चातकप्रिया सं० व्या०--तत् = भोगः, आसक्तिः विषयो वेति, वै= ध्रुवम्, इन्द्रियाणाम् = चक्षुरादीनाम्, इन्द्रः आत्मा, इन्दनात् प्रकाशनात्, तल्लिङ्गजोषणाद्यर्थे इन्द्रियम् इन्द्रलिङ्गम् इन्द्रजुष्टम् इत्यादिशब्देन इन्द्रियशब्दो निपात्यते। महामोहनम् = अनात्मवस्तुषु आसक्तिर्मोहः, मुह्यतेऽनेनेति मोहयतीति वा मोहनम्, महत् मोहनं महामोहनम्। विनापीच्छां बलादाकर्षणं महत्वम्। रागाभिभूतस्य जीवस्य इन्द्रियाणां विषयेषु प्रवर्तनं मोहनम्। यस्य विषयेषु न वास्तवबुद्धिः तस्येन्द्रियाणि विषयेषु न प्रवर्तन्ते। तस्य आत्मन्येव प्रवृत्तिः, ततश्च मोहमुक्तिः। तथा चोक्तम् "स्त्रीपिण्डसम्पर्ककलुषितचेतसो विषयाविषान्धाः ब्रह्म न जानन्ति। इन्द्रियाणि प्रमाथीनि। महामोहेन विषयेषु पुनः पुनः प्रवृत्तिरुचिता। यथाह मनुः-

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।।

हि यतः, अस्य = विषयासक्तस्य, मिथ्यार्थयोगे=अविद्याकल्पिते विषये रूपरसादौ, गतिः=संगमः, नित्या =नियता। मिथ्यार्थयोगाभिहतान्तरात्मा= अविद्याजनितशब्दादिविषयसम्पर्केण अभिहितः स्वरूपात् प्रच्युतः अनात्मभावं प्राप्तः अन्तरात्मा स्वात्मचैतन्यं यस्य सः, समन्तात् = जन्मनि जन्मनि, विषयान् = रूपादिरूपान्, स्मरन् = मनसा ध्यायन्, अत एव, तत्रानुरक्तः सन् , उपास्ते = विषयान्नेव सेवते नात्मानं परमात्मानं वेति।।१०।।

**चातकप्रिया हिन्दी व्याख्या**--सांसारिक भोगों और उसमें आसक्ति की निन्दा करते हुए महर्षि सनत्सुजात कहते हैं कि रूप-रस-गन्ध-स्पर्श और शब्द--इन पाँच प्रकार के सांसारिक विषयों में, जो कि कर्मफलभोग के रूप में प्राप्त होते हैं, आसक्ति ही इन्द्रियों को अत्यन्त मोहित करने वाली है। ये संसार के भोग्य पदार्थ मिथ्या हैं, फिर भी अज्ञानी का उनमें राग होने से प्रवृत्ति भी स्वाभाविक होती है। मिथ्या वस्तुओं की रागासक्ति से व्यथित--चित्त पुरुष प्रत्येक जन्म में उन्हीं मिथ्या-स्त्री, पुत्र, धन, प्रतिष्ठा आदि वस्तुओं को मन से याद करता हुआ उनकी प्राप्ति और संरक्षण--भोग में तल्लीन रहता है। चूँकि, विषयों से निवृत्ति नहीं होती, इसलिए परमात्मा में प्रवृत्ति नहीं होती और परमात्मा में प्रवृत्ति न होने से आत्मज्ञान नहीं होता तथा आत्मज्ञान न होने से महामोह की निवृत्ति भी नहीं होती।।१०।।

**अभिध्या वै प्रथमं हन्ति चैनं**
**कामक्रोधौ गृह्य चैनं च पश्चात्।**
**एतान् बालान् मृत्यवे प्रापयन्ति**
**धीरास्तु धैर्येण तरन्ति मृत्युम्।।११।।**

**अन्वयः**--प्रथमं एनं अभिध्या वै, च, पश्चात् कामक्रोधौ गृह्य हन्ति।

च एतान् बालान् मृत्यवे प्रापयन्तिं नु धीराः धैर्येण मृत्युं तरन्ति॥११॥

**चातकप्रिया सं० व्या०**--विषयाणां स्मरणे दोषं प्रदर्शयन् आह- प्रथमं = आदौ, एनम् = विषयासक्तम् , अभिध्या = विषयस्मरणं, हन्ति= आसक्तं विधाय स्वाभाविकब्रह्मभावात् प्रच्युतं करोति, वै, च, पश्चात्= ततः परम् स्वरूपात्प्रच्यवनानन्तरम्, एनम् = विषयस्मरण- संसक्तम्, कामः = भोगेच्छा, भोगानन्दसमीपे, प्रतिगृह्य = स्वाधीनं कृत्वा, हन्ति= विनाशयति, पुनः विषयाभिलाषस्यापूर्तौ, क्रोधः हन्ति। एवमेते अभिध्या, कामः क्रोधश्च त्रयः, एतान् अभिध्यादिवशङ्गतान्, बालान् = अविजितेन्द्रियान् अविद्याग्रस्तान् जीवान्, मृत्यवे = प्रमादाय, प्रापयन्तिं = समर्पयन्ति बलादिति। तु = किन्तु, धीराः = जितेन्द्रियाः, धैर्येण= जितेन्द्रियत्वेन, मृत्युम् = मोहं प्रमादं वा, तरन्ति = पारयन्ति, परमात्मानमात्मत्वेन विज्ञायेति। यथा श्रूयते--**निचाय्य तं मृत्युमुखादिति।**

**चातकप्रिया हिन्दी व्याख्या**--विषय--स्मरण के दोष का वर्णन करते हुए कहते हैं कि सर्वप्रथम तो विषय का चिन्तन--ध्यान ही विषयासक्त पुरुष को मार देंता है--अर्थात्--उसको स्वाभाविक ब्रह्मभाव से अलग कर देता है। उसके बाद विषय की अभिलाषा राग पैदा करके मारती है,- फिर अभिलाषा की पूर्ति में बाधा आने पर क्रोध पैदा होकर नष्ट कर देता है। इस प्रकार अभिध्या, काम और क्रोध- तीनों अपने वश में आये हुए अज्ञानी जीव को मृत्यु (प्रमाद) के समीप पहुँचा देते हैं, किन्तु जितेन्द्रिय पुरुष अपनी जितेन्द्रियता के बल पर मृत्यु से सर्वथा पार हो जाते हैं॥११॥

**योऽभिध्यायन्नुत्पतिष्णून्निहन्यात्**
**अनाचारेणाप्रतिबुध्यमानः।**
**स वै मृत्युं मृत्युरिवात्ति भूत्वा**
**ह्येवं विद्वान् योऽभिहन्तीह कामान्॥१२॥**

**अन्वयः**-यः अभिध्यायन् उत्पतिष्णून् निहन्यात्, अनाचारेण अप्रतिबुध्यमानः यः विद्वान् एवम् इह कामान् अभिहन्ति सः वै मृत्युः इव भूत्वा मृत्युम् अत्ति।।१२।।

**चातकप्रिया सं० व्याख्या**--यः = मुमुक्षुः योगी, अभिध्यायन्=भूयोभूयः अनित्याशुचिदुःखानुविद्धत्वेन विचारयन् , उत्पतिष्णून् = उत्पत्य उत्पत्य पतन्ति उत्पतिष्णवः क्षणभंगुराः विषयाः शब्दादयः तान्, निहन्यात्= परित्यजेत्। तथा अनाचारेण = तान् परित्यक्तविषयान् प्रति अनादरेण सेवनप्रवृत्त्यभावात् तुच्छत्वबुद्ध्या सर्वत्र सुन्दर्यादीन् तृणवत् प्राप्तानपि, अप्रतिबुध्यमानः = अचिन्तयन्, सः = विषयपराङ्मुखः, वै = निश्चयेन, मृत्युः इव = मृत्योः मृत्युः भूत्वा, मृत्युं = प्रमादं, अत्ति = खादति। निष्कामस्य पुरुषस्य प्रमादभयं नास्तीति तात्पर्यम्। उक्तञ्च-

विषयप्रतिसंहारं यः करोति विवेकतः।
मृत्योर्मृत्युरिति ख्यातः, स विद्वानात्मवित्कविः।।१२।।

**चातकप्रिया हिन्दी**--आत्मज्ञान से ही मृत्यु पर विजय प्राप्त होती है--यह बात बतलाते हुए कहते हैं कि जो पुरुष इस संसार में उपलब्ध विषयों की क्षणभंगुरता, अपवित्रता तथा दुःखदायकता पर गहरायी से विचार करता हुआ उन विषयों का भोग करना छोड़ देता है तथा पुनः प्राप्त होने पर भी उनके प्रति भोगलिप्सा न होने से उन्हें मन से भी नहीं छूता, ऐसा वह निष्काम पुरुष मृत्यु पर विजय प्राप्त कर लेता है। प्रमादरहित होने से उसकी दृष्टि में मृत्यु नामक कोई पदार्थ नहीं रहता। निष्काम ही आत्मज्ञानी होता है और वही विजित–मृत्यु–अमर है।।१२।।

**कामानुसारी पुरुषः कामाननु विनश्यति।**
**कामान् व्युदस्य धुनुते यत् किञ्चित् पुरुषो रजः।।१३।।**

**अन्वयः**--कामानुसारी पुरुषः कामान् अनु विनश्यति। पुरुषः कामान् व्युदस्य यत्किञ्चित् रजः धुनुते।।१३।।

**चातकप्रिया सं० व्या०**--सकामो निन्द्यते। कामानुसारी= विषयाभिलाषी, पुरुषः = मनुष्यः, कामान् = विषयान्, अनु = संसेव्य, विषयैः सह विनश्यति = नष्टो भवति। अनित्याः विषयसमूहाः प्रतिपलं विनाशयुताः, तद्वत्कामी एकं एकं विषयमुपभुज्य शरीरात्मशक्तिहीनो भवन् विनश्यति। परन्तु यः पुरुषः = विवेकी पुरुषः, कामान् = विषयान्, व्युदस्य= दोषदर्शनबुद्ध्या परित्यज्य, परित्यजति वा, सः, यत्किञ्चित् = इह जन्मनि जन्मान्तरे वोपार्जितं, रजः = पापपुण्यात्मकं कर्म, तत् सर्वं, धुनुते = विवेकबुद्ध्या नाशयति। अतः सः कामाननु विनाशमप्राप्य मुक्तो भवतीत्यभिप्रायः। यथा-भागवते-

विकर्म यच्चोत्पतितं कथञ्चित्
धुनोति सर्वं हृदि सन्निविष्टः।।

**चातकप्रिया हिन्दी व्याख्या**--कामनाओं–विषयों के पीछे अर्थात् उनका भोग करते रहने वाला पुरुष क्षणभंगुर विषयों के विनाश के साथ ही शरीर और आत्मशक्ति के विशरण से नष्ट हो जाता है। परन्तु आत्मज्ञानी पुरुष विषयों में दोष देखता हुआ उनके सेवन से सर्वथा विरत होकर प्रारब्ध रूप में अन्तःकरण में स्थित पाप–पुण्यमय कर्म को ज्ञानाग्नि से दग्ध कर देता है। फिर कर्मफलहीन होकर आत्मप्रकाश से पूर्ण होकर वह विद्वान् ब्रह्ममय–मुक्त हो जाता है।१३।

**देहोऽप्रकाशो भूतानां नरकोऽयं प्रदृश्यते।**
**गृध्यन्त एव धावन्ति गच्छन्तः श्वभ्रमुन्मुखाः।।१४।।**

**अन्वयः**--भूतानाम् अयं देहः अप्रकाशः नरकः प्रदृश्यते। अतः श्वभ्रम् उन्मुखाः गच्छन्तः गृध्यन्तः एव धावन्ति।।१४।।

**चातकप्रिया सं० व्याख्या**--प्राणिभिः सकामैः वा जनैः काम्यमानस्य शरीरस्य हेयत्वमुपपादयन्नाह–भूतानाम् = पञ्चभूतोद्भूतानां प्राणिनाम्, अयम् = दृश्यमानः, देहः=शरीरम् , अप्रकाशः = नास्ति स्वस्य प्रकाशः

चैतन्यं यस्मिन् तादृशः, उपाधिना कल्पितः, अत एव केवलं नरकः= नरान् कायति पातयति नरकः अथवा जराव्याधिजन्मादिशतदुःखव्या-कुलत्वात् श्लेष्मासृक्पूयविण्मूत्रपूर्णत्वात् च साक्षान्नरकः। यथाह मनुः-

अस्थिस्थूणं स्नायुबद्धं मांसक्षतजलेपनम्।
चर्मावनद्धं दुर्गन्धि पूर्णं मुत्रपुरीषयोः।।१।।
जराशोकसमाविष्टं रोगायतनमातुरम्।
रजस्वलमनियं च भूतावासमिमं त्यजेत्।।२।।

एवमतिशयजुगुप्सितं स्त्र्यादिदेहं कमनीयधिया गृध्यन्तः =आधिकांक्षन्तः एव, धावन्ति = पतन्ति नरके इति। कथम्? श्वभ्रं = कूपादिकं, उन्मुखाः= विवेक्तुमक्षमाः, गच्छन्तः = व्रजन्तः, अन्धजनाः यथा कूपादिके स्वयं पतन्ति-एवमेव कामिनः प्रमदादिदेहं सेवन्ते–तदेव नरकपतनम्।।१४।।

**चातकप्रिया हिन्दी व्याख्या**--पंच महाभूतों से निर्मित प्राणियों का यह शरीर स्वयंप्रकाश से शून्य होने के कारण जड़स्वरूप नरक के सदृश एकमात्र दुःखप्रद है। अविवेकी पुरुष उन्हीं की आकांक्षा करते हुए अपने तथा स्त्री आदि के उसी शरीर में रमण करते हैं। बार-बार उन्हीं का भोग करना चाहते हैं। उनका यह कार्य उस अन्धे की तरह होता है, जो गड्ढे की ओर दौड़ रहा है और अन्ततः उसी में गिरकर समाप्त हो जाता है।।१४।।

**अमन्यमानः क्षत्रिय कच्चिदन्यं**
**नाधीयते तार्ण इवास्य व्याघ्रः।**
**क्रोधाल्लोभान्मोहभयान्तरात्मा**
**स वै मृत्युस्त्वच्छरीरे य एषः।।१५।।**

**अन्वयः**--क्षत्रिय! कच्चित् अन्यं अमन्यमानः न अधीयते अस्य (देहः) तार्णः व्याघ्रः इव। क्रोधात् लोभात् मोहभयात् अन्तरात्मा स वै त्वत् शरीरे यः एषः (प्रमादः) मृत्युः।।१५।।

**चातकप्रिया सं० व्याख्या**--ये स्त्र्यादिदेहमेवाकांक्षन्तो धावन्ति तेषां विषयविषान्धानां देहो निरर्थक इति निर्दिशन्नाह-

क्षत्रिय! = हे राजन् !, कच्चित् = विषयासक्तः, अन्यं =देहेन्द्रियादिभ्यो व्यतिरिक्तं परमात्मानम् , अमन्यमानः= अजानन्, न = नहि, अधीयते= परमात्मविषयमध्यात्मशास्त्रं न पठति। अस्य = विषयासक्तस्य वेदविदुषोऽपि, देहः =कायः, तार्णः=तृणनिर्मितः, व्याघ्रः इव, निरर्थको भवतीति शेषः। यथाह भगवान् वशिष्ठः-

**चतुर्वेदोऽपि यो विप्रः सूक्ष्मं ब्रह्म न विन्दति।**
**वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभः।।इति।।**

तादृशस्य तस्य केवलं देह एव न वृथा, अपितु एवंभूतः स एव साक्षान्मृत्युः--कथम्? क्रोधाल्लोभान्मोहभयात् = क्रोधलोभाभ्यां हेतुभ्यां मोहभययुक्तः, अन्तरात्मा = शरीरे स्थित आत्मा, त्वच्छरीरे = विषयासक्तस्य देहे, य एषः आत्मा स्थितः, स एव = आत्मविषयकाज्ञानमेव स्वरूपात् प्रच्युतिरेव, मृत्युः = विनाशः--क्रोधलोभादिसमन्वितस्य अजितेन्द्रियस्य स्त्र्यादिषु पुनः पुनः प्रवृत्तिरेव तस्य विनाशहेतुत्वात् साक्षान्मृत्युः। उक्तञ्च गीतायाम्--

**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।।इति।।१५।।**

**चातकप्रिया हिन्दी**-विषयों में आसक्त मनुष्य उन्हीं में विमोहित होता हुआ उन विषयों से भिन्न किसी परमात्म सत्ता को स्वीकार नहीं करता। अतः वह परमात्मस्वरूप के विवेचक अध्यात्मशास्त्र का अध्ययन भी नहीं करता। परमात्मतत्त्वचिन्तन से शून्य मनुष्य का शरीर तृणनिर्मित व्याघ्र के समान ही व्यर्थ है। ऐसा व्यक्ति क्रोध, लोभ, मोह और भय से ढँके हुए शरीर--स्थित अपनी आत्मा को ही मृत्यु मानता है। कहने का भाव यह है कि क्रोधादि--समन्वित देहाभिमानरूप प्रमाद ही विषयी पुरुष की मृत्यु है, क्योंकि वही प्रमाद (अज्ञान) उसके शरीर--विनाश का तथा शोकादि का कारण है।।१५।।

एवं मृत्युं जायमानं विदित्वा
ज्ञानेन तिष्ठन्न विभेति मृत्योः।
विनश्यते विषये तस्य मृत्युः
मृत्योर्यथा विषयं प्राप्य मर्त्यः।।१६।।

अन्वयः--एवं जायमानं मृत्युं विदित्वा ज्ञानेन तिष्ठन् मृत्योः न विभेति। तस्य विषये मृत्युः विनश्यते, यथा मृत्योः विषयं प्राप्य मर्त्यः।।१६।।

चातकप्रिया सं० व्याख्या--एवम् = प्रागुक्तक्रोधादिरूपेण, जायमानम्= उत्पन्नम्, मृत्युम् = प्रमादनामकं जननमरणादिसर्वानर्थकारणम्, विदित्वा = ज्ञात्वा, ज्ञानेन = क्रोधादीन् दोषान् विहायाक्रोधादीन् सम्पाद्य ब्रह्मात्मना, तिष्ठन् = विराजमानः, मृत्योः = यमात्, न विभेति = भीतो न भवति। तथा चात्र श्रुतिः--आनन्दं ब्रह्मणो विद्वान् न विभेति कुतश्चनेति। कस्मात्?-आह--तस्य = ज्ञानिनः, विषये = गोचरे सम्बन्धे वा, मृत्युः = प्रमादादयोऽज्ञानमृत्युः, विनश्यते = नष्टो भवति। अत्र दृष्टान्तः--यथा, मृत्योः = अज्ञानस्य, विषयं = संसारम् , प्राप्य = लब्ध्वा, मर्त्यः = देहाभिमानी जीवः नष्टो भवति। एवमेवात्मज्ञानिनः सान्निध्यं प्राप्य आत्मसाक्षात्कारात् प्रमादाख्योऽज्ञानमृत्युर्नश्यति। जीवस्याज्ञानकृतो देहबन्धः ज्ञानेनैव नष्टो भवति, न हि केवलकर्मणा। ज्ञानमहोदधावप्युक्तम्-

ज्ञानसंस्थानसद्भावो ज्ञानाग्निर्ज्ञानवज्रभृत्।
मृत्युं हन्तीति विख्यातः स वीरो वीतमत्सरः।।१६।।

चातकप्रिया हिन्दी व्याख्या--इस प्रकार काम--क्रोध आदि से उत्पन्न प्रमाद--अज्ञान--शरीराध्यास को ही मृत्यु मान कर स्वरूप में स्थित आत्मज्ञ मृत्यु से नहीं डरता। क्योंकि आत्मसाक्षात्कार हो जाने पर अज्ञान से उत्पन्न मृत्यु स्वयं नष्ट हो जाती है, जैसे कि शरीराध्यस्त

अज्ञानी जीव अज्ञानोत्पन्न मृत्यु से ही नष्ट होता है। वस्तुतः देखा जाय तो जीवात्मा का निवासस्थान शरीर ही जीवात्मा के चले जाने पर दफना कर नष्ट कर दिया जाता है, न कि जीवात्मा। जीवात्मा जब तक शरीर में बैठा रहता है, शरीर को मृत नहीं कहते। पुरुष का शरीर ही मरता है, पुरुष नहीं। वह तो शरीर को रहने के योग्य न मानकर चला जाता है। उसके बाद जो शेष बचे लोग आत्मज्ञान से शून्य स्वार्थी सगे--सम्बन्धी होते हैं, वही कहते हैं कि अमुक नामधारी मर गया।।१६।।

*धृतराष्ट्र उवाच-*

**यानेवाहुरिज्यया साधुलोकान् द्विजातीनां पुण्यतमान् सनातनान्।**
**तेषां परार्थं कथयन्तीह वेदा एतद् विद्वान्नैति कथं नु कर्म।।१७।।**

**अन्वयः**--द्विजातीनां इज्यया यान् पुण्यतमान् सनातनान् लोकान् आहुः। वेदाः इह तेषां परार्थं कथयन्ति नु विद्वान् कर्म कथं न एति।।१७।।

**चातकप्रिया सं० व्याख्या**--अमृतोपदेशस्य श्रोता धृतराष्ट्रोऽत्र शङ्कते-द्विजातीनाम् = ब्राह्मणक्षत्रियविशाम्, इज्यया = ज्योतिष्टोमादिना यज्ञेन, यान् = शास्त्रोक्तान्, पुण्यतमान् = इंद्रलोकाद्यपेक्षया पवित्रान्, सनातनान् = व्यवहारापेक्षया शाश्वतान्, साधुलोकान् = सत्यादिलोकान्, आहुः= कथयन्ति। वेदाः = ऋगादयः, इह = जगति, तेषाम् = सत्यादिलोकानामेव, प्राप्तिं, परार्थम् = मोक्षप्रापकत्वं परमपुरुषार्थं वा, कथयन्ति = स्वीकुर्वन्ति, तु = तर्हि, विद्वान् = आत्मवित्, एतत् कर्म = ब्रह्मलोकपर्यन्तानां लोकानां साधनभूतं यज्ञादिकर्म, कथं= कस्मात्, न, एति = स्वीकरोति। यदा कर्मभिरेव मोक्षप्राप्तिः तदा ज्ञानेन किमिति शङ्काप्रश्नः।।१७।।

**चातकप्रिया हिन्दी व्याख्या**--धृतराष्ट्र ने "ज्ञान ही मोक्ष का साधन है और कर्म बन्धन का कारण" यह सुन कर प्रश्न किया--कि हे भगवन्! वेदादि शास्त्रों में द्विजों के लिए ज्योतिष्टोम आदि यज्ञों

के द्वारा जिन पवित्रमय सनातन एवं उत्तम ब्रह्म आदि लोकों की प्राप्ति कही गई है, उसी को वेदों में परम पुरुषार्थ भी कहा गया है। तो फिर आत्मवित् पुरुष इन यज्ञादि कर्मों का सम्पादन क्यों नहीं स्वीकारता?।।१७।।

*सनत्सुजात उवाच-*

**एवं ह्यविद्वान् उपयाति तत्र**
**तथार्थजातं च वदन्ति वेदाः।**
**स नेह आयाति परं परात्मा**
**प्रयाति मार्गेण निहन्त्यमार्गान्।।१८।।**

**अन्वयः**--एवं हि अविद्वान् तत्र उपयाति च तथा वेदाः अर्थजातं वदन्ति, सः परात्मा इह न आयाति, मार्गेण अमार्गान् निहन्ति परं प्रयाति।।१८।।

**चातकप्रिया सं० व्या०**--उत्तरं प्रस्तौति भगवान् सनत्सुजातः--एवं हि = सत्यम् ब्रह्मलोकादिसाध्यं सुखं परार्थं स्वीकुर्वन्, अविद्वान् = विषयासक्तः, तत्र = ब्रह्मलोकादिसाधनभूते कर्मणि, उपयाति = उपगच्छति--संल्लग्नो भवति, नहि स्वात्मविद्--अविद्यादिदोषदर्शनात्। यथोक्तं वृहदारण्यकोपनिषदि-

**अनन्दा नाम ते लोका अन्धेन तमसा वृताः।**
**ताँस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधा जनाः।।इति।।**

तथा च वेदाः = ऋगादयः, तस्यैवाविदुषः, अर्थजातम् = भोगमोक्षाख्यं प्रयोजनसाधारणं, वदन्ति = बोधयन्ति। यतो हि अविदुषः एव कर्मसाधनत्वमुक्तं, न हि विदुषः। तस्मात् आत्मवित्पुरुषः ब्रह्मलोकाद्यनित्यसुखे तत्साधनभूते वा यज्ञादिकर्मणि न प्रवर्तते। पुनः स विद्वान् किं कुरुते? तत्र कथयति--सः = ज्ञानीपुरुषः, परात्मा = परमात्मानम् आत्मत्वेन अवगम्य ब्रह्मैव सन्, इह = साधने, न आयाति=

संसक्तो न भवति। स एवैवंविधो जीवः, मार्गेण = योगशात्रोक्त-सुषुम्नानाड्या ब्रह्मोपासनया वा, अमार्गान् = तत्तल्लोकप्रापकान् कर्ममार्गान्, निहन्ति = निरस्य, परं = ब्रह्मलोकद्वारा ब्रह्म, प्रयाति= प्राप्नोति। यथोक्तं वृहदारण्यके-"तद्यथा पेशस्कारी पेशसा मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं कुरुते, एवमेवेदं शरीरं निहत्य विद्यां गमयित्वाऽ-न्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा प्राजापत्यं वा ब्राह्मं वेति" "इति तु कामयमानोऽथाकामयमानो योऽकामो निष्कामः आप्तकामः स्यात्", "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते" इति।।१८।।

चातकप्रिया हिन्दी व्याख्या--धृतराष्ट्र की आशंका का उत्तर देते हुए महात्मा सनत्सुजात ने कहा--हे राजन् ! वेदों में यज्ञ आदि कर्मानुष्ठान के द्वारा जो परम लोक की प्राप्ति कही गई है, वह केवल सांसारिक मिथ्या पदार्थों में अनुरक्त लोगों के लिये है, क्योंकि वे अज्ञानवश आत्मतत्त्व का साक्षात्कार नहीं कर सकते। अतः वेदों का कथन असंगत नहीं है। किन्तु निष्काम निरीह पुरुष ज्ञानोपासना के द्वारा या सुषुम्ना नाड़ी को जगाकर योग--साधन के द्वारा कर्ममार्गों की उपेक्षा करके परमात्मस्वरूप होता हुआ परब्रह्म की प्राप्ति कर लेता है। जैसा कि गीता में भी कहा गया है--

"ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्।"

आत्मवित् ज्ञानमार्ग से ब्रह्मभाव को प्राप्त हो जाता है और कर्मयोगी कर्मोपासना के द्वारा स्वर्गादि को प्राप्त करता है अथवा निष्काम कर्मोपासना से मुक्त हो जाता है।।१८।।

*धृतराष्ट्र उवाच--*

कोऽसौ नियुंक्ते तमजं पुराणं
स चेदिदं सर्वमनुक्रमेण।
किं वाऽस्य कार्यमथवा सुखं च
तन्मे विद्वन् ब्रूहि सर्वं यथावत्।।१९।।

अन्वयः-विद्वन्! चेत् इदं सर्वम् अनुक्रमेण सः असौ अजं पुराणं कः नियुङ्क्ते, वा अस्य किं कार्यम्, च अथवा सुखम्, तत् यथावत् मे ब्रूहि।१९।

चातकप्रिया सं० व्या०--पूर्वश्लोके सनत्सुजातेन प्रतिपादितं जीवब्रह्मणोरैक्यमसहमानः प्रेरयति धृतराष्ट्रः--कोसाविति। ननु यदि परमात्मैव सत्यादिलक्षणः सन्नपि क्रमशः आकाशादि पृथिव्यन्तं निर्माय तदनुप्रविश्य अन्नमयाद्यात्मना वर्तमानः संसरति तर्हि असौ कः = कीदृशः किन्नामधेयः, यः, तम् = सत्यादिलक्षणम्, अजम् = अजन्मानम् परमात्मानं, (संसारे) नियुङ्क्ते = विनियोजयति। यदि नान्येन प्रेरितः सः स्वयमेव स्वात्मानं नियङ्क्ते तर्हि अस्य = एतादृशस्य नियोजनस्य अथवा परमात्मानः नानायोनिषु प्रवर्तमानस्य किम्, कार्यं = प्रयोजनम्? अथवा असुखम् = तूष्णींभूतस्य संसारेऽप्रवर्तमानस्य स्वमात्म्यस्थितस्य तस्य परात्मनः किम् अनर्थजातंभ भवति? हे विद्वन् = ब्रह्मन्, तत् सर्वं यथावत्= याथातथ्यम्, मे = मह्यम्, ब्रूहि = कथय। यथोक्तमन्यत्रापि-

"यद्येवं स कथं ब्रह्मन् पापयोनिषु जायते।
ईश्वरश्च कथं भावैरनिष्टैः सम्प्रयुज्यते"।।१९।।

चातकप्रिया हिन्दी व्याख्या--धृतराष्ट्र जीवब्रह्म की एकता को स्वीकार न करते हुए बोले--हे विद्वन् ! यह सम्पूर्ण चराचर जगत् यदि परमात्मा का स्वरूप ही है तो उस अजन्मा सनातन पुरुष को सृष्टि--रचना करके उसमें प्रविष्ट होने के लिए कौन प्रेरित करता है? अथवा यह बतलावें कि उस परमात्मा को जगत् के रूप में स्वयं प्रकट होने की क्या आवश्यकता थी? उसने किस आनन्द की उपलब्धि के लिए ऐसा किया?-ये सारे विकल्प यथार्थ का ज्ञान दे कर दूर कीजिए।।१९।।

*सनत्सुजात उवाच-*

दोषो महानत्र विभेदयोगे
ह्यनादियोगेन भवन्ति नित्याः।

तथास्य नाधिक्यमपैति किञ्चित्
अनादियोगेन भवन्ति पुंसः।।२०।।

**अन्वयः**--अत्र विभेदयोगे महान् दोषः। हि अनादियोगेन नित्याः भवन्ति तथा अस्य किञ्चित् आधिक्यम् न अपैति, अपि च पुंसः अनादियोगेन भवन्ति।।२०।।

**चातकप्रिया सं० व्या०**--अत्र परब्रह्मणि, जगत्कारणे, नियोज्य-नियोजकभेददर्शनात् एकस्य च तथात्वाभावात् परब्रह्मणि नानात्वमवश्य-मेव स्वीकरणीयम्। फलतः कश्चिन्नियोजकः परमात्मा च नियोज्यः स्वीकर्त्तव्यः। किन्त्वैवं विभेदयोगे = नियोज्यनियोजक-सम्बन्धस्वीकृतौ, महान् = विपुलः, दोषः = शास्त्रविरोधः भवति। यतो हि परब्रह्मणो विषये वेदेषूक्तम्--"एकमेवाद्वितीयम्" "तत्त्वमसि" "अहं ब्रह्मास्मि" "अयमात्मा ब्रह्म" इत्यादि। एवं ब्रह्मणः कूटस्थत्वमेकत्वादिकञ्च प्रति-पादितं भवति। ब्रह्मणि नानात्वसम्भावनया नैको दोषोऽपि तु बहवो दोषा भवेयुः। यथा-अतथावादिनां द्वैतिनां वैदिकत्वम्, अनित्यत्वम्, परमार्थाद्वैतत्वहानिरिति।

पूर्वपक्षी वक्तुं शक्यते यन्नास्माभिर्ब्रह्मणो नानात्वमभ्युपगम्यतेऽपि तु जीवब्रह्मणोः भेदः। अत्रापि विनाशप्राप्तिरूपो महान् दोषो भवेत् यथा-श्रूयते-"मृत्योः स मृत्युमि"ति। "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" पुनश्च जीवब्रह्मणोः भेदे स्वीकृते "तत्त्वमसि", "अहं ब्रह्मास्मि", "अयमात्मा ब्रह्मे"त्यादिश्रुति--स्मृतिपुराणादिषु प्रवचनत्वादवैदिकत्वं नाम महान् दोषो भवति। तर्हि कथं पूर्वपक्षिणः पक्षे जीवेश्वरादिव्यवहारभेदः, कथं वा तेषां नित्यत्वमिति प्रश्नं समादधतोच्यते--अनादियोगेन भवन्ति नित्येति।। अनादिः = अविद्या माया वा। यथोक्तं गीतायाम् -"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" "इयं हि साक्षादि"ति च। तया तस्याः वा योगः सम्बन्धः तेन नित्याः जीवादयोः, भवन्ति = जायन्ते। मायायोगेन अद्वितीयस्यापि परमेश्वरस्य

बहुरूपत्वमुपपद्यत एवेति तात्पर्यम्। यथोपनिषत्सु श्रूयते-"इन्द्रो मायाभिः पुरुरूप ईयते" "एको देवः सर्वभूतेषु गूढः", "एकं सद् विप्राः बहुधा वदन्ति", "एकः सन् बहुधा विचचार", "त्वमेकोऽसि", "अजायमानो बहुधा विजायते"। एवमेवोक्तं मोक्षधर्मे-"एक एव तु भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्"।। याज्ञवल्क्यः समर्थयति-"आकाशमेकमि"ति। एवमेवैक्यप्रतिपादिका अन्या अप्युक्तयः- "न जायते म्रियते वा कदाचित्" "अहं प्रशास्ता सर्वस्य", न चाप्ययं संसरति न च संसारयति प्रभुः। दृश्यमानो भेदस्तु मायानिमित्तकः। परन्तु कार्यकारणात्मना स्थितस्यापि परमेश्वरस्य आधिक्यमाधिपत्यञ्च नापैति। परमात्मा कूटस्थ एव भवति संसारस्य मायात्मकत्वात्।

द्वितीयो वार्थः--पुंसः = पूर्णपरमात्मनो माया अनादिसिद्धा तद्योगेन परमात्ममायायोगेन, बहवो जीवा भवन्ति जायन्ते। यथाह अनुगीतासु- "इदं जगदनेकमिति वेदानुशासनम्"। भगवता पराशरेणोक्तम्- "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः"। एवमेव ब्राह्मपुराणे कावषेयगीतासु भगवान् सनत्सुजात आह-"असंगेन वेदान् पठध्वम्"। अतः परमात्मन एव संसारो जायते मायायोगेनेति सिद्धम्।।२०।।

चातकप्रिया हिन्दी व्याख्या--धृतराष्ट्र की शंका का उत्तर देते हुए महात्मा सनत्सुजात कहते हैं--हे राजन् ! आपके प्रश्न के अनुसार जीव और ब्रह्म का भेदविषयक एक महान् दोष उपस्थित होता है, जबकि जीव और ब्रह्म में भेद की कल्पना वेदविरुद्ध है। जीवों का भोग्य पदार्थों से सम्बन्ध और उनके जीवरूप की प्रतीति अनादि माया के कारण ही होती है। परमात्मा ही अनादि माया का आश्रय लेकर अपने को विश्व के रूप में प्रकट करता है। जैसाकि श्रुति कहती है-"इन्द्रो मायाभिः पुरुरूप ईयते।" माया के संयोग से परमात्मा में मिथ्याभूत जीवों की प्रतीति जल में सूर्यविम्ब की प्रतीति की भाँति है। जीव का यह विभेद औपाधिक है। अतः परमात्मा के

स्वरूप में इस भेद से कोई अपकर्ष नहीं होता। जीव के देहादि माया के संसर्ग से ही बार--बार उत्पन्न होते हैं।।२०।।

य एतद् वा भगवान् स नित्यो
विकारयोगेन करोति विश्वम्।
तथा च तच्छक्तिरिति स्म मन्यते
तथार्थयोगे च भवन्ति वेदाः।।२१।।

अन्वयः--एतत् वा यः भगवान् स नित्यः विकारयोगेन विश्वं करोति, तथा तच्छक्तिः इति मन्यते स्म, तथा च अर्थयोगे वेदाः भवन्ति।।२१।।

चातकप्रिया सं० व्या--एवं तावत् प्रागुक्तमेकस्यैव परमात्मनः अनादिमायायोगेन नानात्वमिदानीमीश्वस्य कारणत्वमपि मायोपाधिकमिति वक्तुमारभते--यः एतद् वा = परमार्थभूतः, भगवान्= ऐश्वर्यादियुतः, "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा।।" भगाः सन्ति अस्येति भगवान् जगत्कर्तृत्वनियन्तृत्वादिशक्तिसम्पन्नः, यथा-"उत्पत्तिं च विपत्तिं च भूतानामगतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति।।" एतादृशो भगवान् नित्यः= विनाशरहितः, विकारयोगेन = विक्रियते परिणमतेऽसाविति विकारः, पराधीनसत्ताका माया, तस्या योगः तेन आवृतिविक्षिप्तिलक्षणया शक्त्या, विश्वं = जगत्, ईक्षणादिपूर्वकं, करोति = सृजति। तथा च = तेनैव रूपेण स्वात्मनि जगत् स्वप्नवत् अवभासयन्ती, तच्छक्तिः= तस्य परमात्मनः शक्तिः माया तदनन्यास्तीति वेदोऽपि मन्यते स्म। सैव मायाशक्तिः स्वप्नेन्द्रजालवत् रचयति विश्वं, नहि अपूर्वादिलक्षणः परमात्मेति। तथा च श्रुतिः-"इन्द्रो मायाभिः पुरुरूप ईयते", "देवात्म शक्तिं स्वगुणैर्निगूढाम् " "परास्य शक्तिर्विविधैव श्रूयते"। स्मृतिरपि कथयति-"दैवी ह्येषा गुणमयी मम माया दुरत्यया।" "अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।" "प्रकृतिं स्वामधिष्ठाय सम्भवाम्या-

त्ममायया।" "मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।" एवं प्रतिफलितं भवति यत् चित्सदानन्दाद्वितीयस्य परमात्मनः नास्ति स्वतःकारणत्वमपि तु मायावेशवशादिमत् कारणत्वमिति। शक्तिशक्तिमतोरभेदः एवमुपर्युक्तश्लोकद्वयेन जीवब्रह्मणोरैक्यं जगतश्च मिथ्यात्वमुक्तम्। ब्रह्म च सर्वधर्मविवर्जितं शुद्धं सिद्धं भवति।।२१।।

**चातकप्रिया हिन्दी व्याख्या**--षडैश्वर्य--सम्पन्न भगवान् नित्य, शुद्ध, सर्वधर्म-विवर्जित हैं। वह अपनी माया से विश्व का निर्माण करते हैं। भगवान् की शक्ति--माया उनसे अभिन्न है और संसार की रचना में समर्थ है। (हे धृतराष्ट्र) इस बात को मैं मानता हूँ। माया के जगत्कर्तृत्व और ईश्वर के अविकारित्व आदि के सम्बन्ध में वेद स्वयं प्रमाण हैं।।२१।।

*धृतराष्ट्र उवाच-*

**यस्माद्धर्मानाचरन्तीह केचित्**
**तथाऽधर्मान्केचिदिहाचरन्ति।**
**धर्मः पापेन प्रतिहन्यते वा**
**उताहो धर्मः प्रतिहन्ति पापम्।।२२।।**

**अन्वयः**--केचित् इह धर्मान् आचरन्ति। तथा केचित् इह अधर्मान् आचरन्ति। यस्मात् वा पापेन धर्मः प्रतिहन्यते वा धर्मः पापं प्रतिहन्ति।।२२।।

**चातकप्रिया सं० व्या०**--यस्माद्धेतोः प्रयोजनात्, केचित्= सत्त्वगुणयुक्ताः पुरुषाः, इह = जगति, धर्मान् = श्रुतिस्मृतिविहितानि अग्निहोत्रादीनि कर्माणि, आचरन्ति = अनुतिष्ठन्ति, तथा = तद्वत्, केचित् = रजस्तमोबहुलाः जनाः, अधर्मान् = निषिद्धकर्माणि, कुर्वन्ति। तत् किं पापेन = दुष्कर्मजनितदुरदृष्टेन, धर्मः = सत्कर्मजन्यं सौभाग्यं, प्रतिहन्यते = लुप्यते, उत = अथवा, धर्मः = सदाचरणजन्यं फलं, पापम् =

अधर्मजनितं फलं, प्रतिहन्ति = नाशयति। तुल्यबलेन परस्परं धर्माधर्मयोः विनाशो भवेदिति वेति सर्वं श्रद्दधानाय मे ब्रूहि।।२२।।

**चातकप्रिया हिन्दी व्याख्या**--धृतराष्ट्र ने पूछा कि हे विद्वन् ! इस संसार में सत्त्व गुण--बहुल पुरुष सत्कर्म (धर्म) का आचरण करते हैं और रजस्तमोगुण--बहुल पुरुष दुष्कर्म (अधर्म) का आचरण करते हैं। तो क्या तुल्य बल के आधार पर परस्पर धर्म से अधर्म पराजित होता है अथवा अधर्म के द्वारा धर्म प्रतिघातित होता है। कृपा कर, आप मुझसे कहें।।२२।।

*सनत्सुजात उवाच-*

**तस्मिन् स्थितो वाप्युभयं हि नित्यं**
**ज्ञानेन विद्वान् प्रतिहन्ति सिद्धम्।**
**यथान्यथा पुण्यमुपैति देही**
**तथागतं पापमुपैति सिद्धम्।।२३।।**

**अन्वयः**--तस्मिन् स्थितः अपि विद्वान् हि उभयं नित्यं ज्ञानेन प्रतिहन्ति, (इदम् ) सिद्धम्, अन्यथा देही यथा आगतं पुण्यं उपैति तथा पापम् (अपि)।।२३।।

**चातकप्रिया सं० व्या०**--तस्मिन् = पुण्यात्मके पापात्मके च कर्मणि, स्थितः = वर्तमानः कुर्वन् वा, अपि, उभयम् = पुण्यापुण्यस्वरूपात्मकं कर्म, नित्यम् = नियमेन, विद्वान् = आत्मविद्, ज्ञानेन = आत्मबोधेन, प्रतिहन्ति = विनाशयति, आत्मविद् ज्ञानद्वारोभयं कर्म प्रतिहन्ति, कथमेतदवगम्यतेऽत्राह--इदम्, सिद्धम् = प्रसिद्धं श्रुतिस्मृतीतिहासपुराणेषु। तथा च श्रुतिः--

"भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।।"

यथा पुष्कर पलाशे आपो न श्लिष्यन्ते। एवं विदि पापं कर्म न श्लिष्यते। यथैषीका तूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते।इति।

स्मृतिरपि–"यथैधांसि समिद्धोऽग्निः भस्मसात्कुरुतेऽर्जुन।"

एवमेवान्यत्रापि–पुराणेषु-

"क्षणमात्मानुसन्धानात् पापं दहति कोटिशः।
अन्यथा पापविध्वंसो न भवेत्कोटिपुण्यतः।।"

अन्यथा = आत्मानुसन्धानातिरिक्तम्, विषयासक्तः देही = ज्ञानहीनः, यथा = येन प्रकारेण, आगतं = प्रारब्धप्राप्तम्, पुण्यम् = सत्कर्मणः फलम्, उपैति = प्राप्नोति, तथा = तद्वत्, आगतम्, पापम् = दुष्कर्मणः फलं = दुःखम्, लभते। एतत् सर्वं कथमवगम्यते इति चेत् श्रुति-स्मृतिपुराणेष्वेतदपि प्रख्यातम्। तथा च श्रुतिः-

"इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः।
नाकस्य पृष्ठे सुकृतेन भूत्वेमं लोकं हीनतरं वा विशन्ति।।"इति।।
अनन्दा नाम ते लोका अन्धेन तमसा वृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः।।

एवं गीतायाम् -

त्रैविद्यां मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति।।इति।।२३।।

चातकप्रिया हिन्दी व्याख्या--सनत्सुजात बोले-"हे राजन्, आत्मविद् पुरुष पाप और पुण्य में एक सदृश स्थित रह कर भी उन दोनों (पाप-पुण्य) को अपने ज्ञान के द्वारा नष्ट कर देता है; क्योंकि धर्म-अधर्म या पाप--पुण्य दोनों ही अज्ञानोत्पन्न हैं। इनकी सत्ता तभी तक है जब तक अज्ञान है। आत्मज्ञान के द्वारा देहाभिमान के नष्ट होते ही पुण्य-पाप की भावना नष्ट हो जाती है। यह बात श्रुति-स्मृति तथा पुराणों में भी प्रसिद्ध है। साथ ही यह भी प्रसिद्ध है कि ज्ञान ही मनुष्य का आत्मकल्याणकारी परम पुरुषार्थ है। उसके

न रहने पर देहाभिमानी जीवात्मा भविष्य के धर्माधर्म के फलरूप में पुण्य और पाप अर्थात् सुख और दुःख पाता है।।२३।।

गत्वोभयं कर्मणा भुज्यतेऽस्थिरं
शुभस्य पापस्य स चापि कर्मणा।
धर्मेण पापं प्रणुदतीह विद्वान्
धर्मो बलीयानिति तस्य विद्धि।।२४।।

**अन्वयः**--सः कर्मणा शुभस्य पापस्य अस्थिरम् उभयं गत्वा भुज्यते। अपि च कर्मणा (भ्रमते)। विद्वान् इह धर्मेण पापं प्रणुदति (अतः) तस्य धर्मः बलीयान् इति विद्धि।।२४।।

**चातकप्रिया सं० व्या०**--सः = अविद्वान् पुरुषः, कर्मणा = पुण्यापुण्यात्मकेन स्वकार्येण, शुभस्य = धर्मस्य, पापस्य = अधर्मस्य, अस्थिरम् = क्षयिष्णु, उभयम् = पुण्यपापयोः फलं स्वर्गनरकाख्यम्, गत्वा = प्राप्य, भुज्यते = स्वर्गे सुखं पुण्यफलं नरके च दुःखं पापफलम्। यथा श्रूयते वृहदारण्यके "यो वा एतदक्षरम् " इति। छान्दोग्ये-"अथ येऽन्यथातो विदुरन्य राजानस्ते क्षय्यलोका भवन्ति।" स चापि = सोऽपि च, विद्वान्, धर्मेण = पुण्यात्मकेन कर्मणा, इह = लोके, पापं = दुष्कर्मणः फलम्, प्रणुदति = विनाशयति। अतः, तस्य = वक्ष्यमाणलक्षणस्य विदुषः, धर्मो = पुण्यम्, बलीयान् इति विद्धि = जानीहि, ईश्वरार्पणकारणादिति। यथोक्तम् -

तदर्थमुक्तं तप एतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान्।
पुण्येन पापं विनिहत्य पश्चात् स जायते ज्ञानविदीपितात्मा।।१।।
ज्ञानेन चात्मानमुपैति विद्वानथान्यथा स्वर्गफलानुकांक्षी।
अस्मिन् कृतं तत्परिगृह्य सर्वममुत्र भुङ्क्ते पुनरेति मार्गम्।।२।।

**चातकप्रिया हिन्दी व्याख्या**--अनात्मविद् पुरुष अपने कृत कर्म के अनुसार परलोक में जाकर पुण्यापुण्यात्मक अनित्य फलों को भोगता है, परन्तु आत्मज्ञानी पुरुष इसी लोक में अपने शुभ कर्म के द्वारा

पापकर्म का नाश कर देता है। क्योंकि ईश्वरार्पण बुद्धि से किया गया आत्मज्ञानी का धर्म बलवान् होता है--तुम ऐसा जानो।।२४।।

**येषां धर्मेषु विस्पर्धा बले बलवतामिव।**
**ते ब्राह्मणा इतः प्रेत्य स्वर्गे यान्ति प्रकाशताम्।।२५।।**

**अन्वयः**--येषां बले बलवतामिव धर्मेषु विस्पर्धा ते इतः प्रेत्य ब्राह्मणाः स्वर्गे प्रकाशतां यान्ति।।२५।।

**चातकप्रिया सं० व्या०**--येषाम् = विषयासक्तानाम्, बले = शक्तिसम्पन्ने राज्ञि, बलवतामिव = शक्तिसम्भृतानामितरेषां राज्ञामिव, विस्पर्द्धा= संघर्षः--यथा कश्चिद् बलवान् राजा बलवन्तमन्यं राजानं दृष्ट्वा शोचति यदहमपि अस्मादप्यधिकां बलवत्तां सम्पाद्य सुखी भूयासमिति संघर्षो वर्तते तद्वत् , धर्मेषु स्वर्गादीनां साधनभूतेषु ज्योतिष्टोमादिषु विहितकर्मसु, विस्पर्द्धा--अहमस्मादपि सुखिनो जनात् उत्कृष्टतरं शास्त्रविहितं धर्मं कृत्वा ततोऽप्यधिकः सुखी भूयासमिति। अथ चैतादृशः ते = अनित्यफलासक्ताः ज्योतिष्टोमादिधर्मकारिणः ब्राह्मणाः, इतः = संसारात्, प्रेत्य = मृत्वा, धूमादिमार्गेण गत्वा, स्वर्गे = स्वर्लोके, नक्षत्रादिरूपेण, प्रकाशताम्= ज्योतिर्मयताम्, यान्ति = प्राप्नुवन्ति यथा श्रूयते-**"अथ य इमे ग्रामइष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति"**। **अन्यच्च--**

**ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।**
**परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्।।इति।।२५।।**

**चातकप्रिया हिन्दी**--यहाँ बतला रहे हैं कि जो विषयपरायण भोगवादी मनुष्य दूसरे से अधिक स्वर्गादि सुख पाने की दृष्टि से स्पर्धापूर्वक ज्योतिष्टोमं आदि वेदविहित कर्म का अनुष्ठान करते हैं, वे मरने के बाद पितृयान से धूमरात्र्यादि के द्वारा स्वर्ग में जाते हैं और वहाँ नक्षत्रादि के रूप में प्रकाशित होते हुए स्वर्गीय भोग भोगते हैं। पुनः पुण्य क्षय होने के बाद मर्त्यलोक में वापस आ जाते हैं।

ऐसे पुरुषों की यह धर्मसम्पादिका स्पर्धा परस्पर दो बलवान राजाओं की तरह होती है। जैसे एक बलवान् राजा दूसरे बलवान् राजा को बल से जीत कर उससे अधिक सुखी होना चाहता है, वैसे ही एक धार्मिक दूसरे धार्मिक से अधिक धर्म कर उससे अधिक सुख–भोग प्राप्त करना चाहता है।।२५।।

**येषां धर्मे न च स्पर्धा तेषां तज्ज्ञानसाधनम्।**

**ते ब्राह्मणा इतो मुक्ताः स्वर्गं यान्ति त्रिविष्टपम्।।२६।।**

**अन्वयः**--येषां च धर्मे स्पर्धा न तेषां तत् (कर्म) ज्ञानसाधनम्, ते ब्राह्मणाः इतः मुक्ताः त्रिविष्टपं स्वर्गं यान्ति।।२६।।

**चातकप्रिया सं० व्या०**--अनासक्तकर्मिणां फलं वर्णयन्नाह–येषामिति।। येषाम् = अनासक्तानाम्, च, धर्मे = ज्योतिष्टोमादौ, स्पर्धा = परस्परमहमहमिकयापूर्वकं तदनुष्ठानभावना, न = नहि वर्तते, तेषां= फलनिरपेक्षतया परमेश्वरप्रीत्यर्थं धर्मानुष्ठातृणाम्, तत् = धर्मानुष्ठानं यज्ञादिकं कर्म, ज्ञानसाधनम् = चित्तशोधनद्वाराऽऽत्मज्ञानस्य साधनं भवतीति। एवं कुर्वाणाः ते = विषयानाकृष्टचेतसः, ब्राह्मणाः =आत्मविदः, इतः = अस्मात् कार्यकारणात्मनो जगतः, मुक्ताः = प्रेत्य, स्वर्गम्= पूर्णानन्दं ब्रह्म, यान्ति =लभन्ते। कीदृशं स्वर्गम् -यत्र आत्मविदो यान्ति- विशिनष्टि–त्रिविष्टपम्=त्रिभिः आध्यात्मिकाभिः तापैः सत्त्वादिभिर्जा- ग्रदादिभिर्वा मुक्तम्। अथवा तैर्विष्टम्पातीति त्रिविष्टपम्। तथा च श्रुतिः- "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति। तथा चापस्तम्बः-"तद्यथामे फलार्थं निर्मिते छाया गंध इत्यनुत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते इति।।२६।।

**चातकप्रिया हिन्दी व्याख्या**--रूप--रसादि विषयों में अनासक्त कर्मानुष्ठाता स्वर्गादि अनित्य फलदायक यज्ञादि में स्पर्धा नहीं रखते। उनके कर्मानुष्ठान ईश्वरप्रीत्यर्थ होने के कारण केवल चित्तशुद्धि प्रदान करते हैं। इस प्रकार के कर्मसम्पादक, साधक पुरुष आत्मज्ञान प्राप्त

कर इस लोक से सर्वथा मुक्त होकर तापत्रयशून्य पूर्ण ब्रह्मानन्द को प्राप्त हो जाते हैं।।२६।।

इदानीं विदुषः समाचारमाह-

**तस्य सम्यक् समाचारमाहुर्वेदविदो जनाः।**
**नैनं मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनम्।।२७।।**

अन्वयः--तस्य समाचारं वेदविदो जनाः सम्यक् आहुः बाह्यम् आभ्यन्तरं जनं भूयिष्ठं न मन्यते।।२७।।

**चातकप्रिया सं० व्या०**--तस्य = अकरणे प्रत्यवायं मत्वा धर्मार्थमेव धर्मानुष्ठातुर्नैव स्वर्गार्थे न वा ज्ञानार्थे, समाचारम् = आचरणम्, वेदविदः= वेदविद्वान्सः, जनाः = पुरुषाः, सम्यक् आहुः = सुस्पष्टं कथयन्ति अर्थात् धर्माचरणात् तादृशः कामनारहितः ऐहिकमामुष्मिकं वा किमपि फलं न वाञ्छति। बाह्यम् = वर्णाश्रमवयोऽवस्थाद्युचितव्यवहारसम्पन्नम्, आभ्यन्तरं = वैदिकत्वान्निष्कामत्वाच्च ध्यानादिसम्पन्नम्, जनम्=विद्वान्सम्, भूयिष्ठम् = अत्यधिकम् , न मन्येत = न मानयेत् । यतो हि तस्यानन्दविषये श्रूयते- "स एक इन्द्रस्यानन्दः", "स एकः प्रजापतेरानन्दः" इति प्रतिपर्यायं श्रोत्रियस्य चाकामहतस्य" इति आनन्दोत्कर्षः।।२७।।

**चातकप्रिया हिन्दी व्याख्या**--निष्काम धर्माचारी विद्वान् के आचरण का वर्णन करते हुए कहते हैं--वह ज्ञानी पुरुष कामनाहीन होकर केवल धर्म समझकर ही यशादि का अनुष्ठान करता है। ऐसे व्यक्ति की वेद के विद्वान् प्रशंसा करते हैं। बहिर्मुख अर्थात् वर्णाश्रम आदि धर्मों में संलग्न एवम् अन्तर्मुख पुत्र--कलत्र आदि के ध्यान में लीन मनुष्य को अधिक आदर नहीं देते।।२७।।

कीदृशे देशे अस्य वास इत्याह-

**यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोदकम्।**
**अन्नपानं च विप्रेन्द्रस्तज्जीवेन्नानुसंज्वरेत्।।२८।।**

**अन्वयः**--विप्रेन्द्र ! प्रावृषि तृणोदकम् इव अन्नपानं जीवेत् न अनुसंज्वरेत्।।२८।।

**चातकप्रिया सं० व्या०**--अहिंसाप्रधानान् योगिधर्मानाह–**यत्रेति**।। यत्र= स्थाने गृहे वा सर्वथोपद्रवरहिते, अन्नपानं = अन्नं भोजनं पानं जलादिकम् च, ब्राह्मणस्य = योगिनः, भूयिष्ठं = प्रचुरम् वर्तते, इति मन्येत = जानीयात् , कथम् ? प्रावृषि = वर्षर्तौ, प्रचुरमुपलब्धं तृणोदकम् = तृणम्, उदकम् च तदिव। कुत्रचित् "तृणोलपः" इति पाठे मुनीनां भोजनयोग्यः दुर्वाविशेषः इत्यर्थः। "तृणोलप इति ख्यातो मुनिभोज्यौदनादिषु।" तत् = तादृशं स्थानं, प्राप्य, जीवेत् = प्राणयात्रां कुर्यात्। नानुसंज्वरेत् = क्षुद्बाधया स्वात्मानं न पीडयेत् । अन्नपानादिकं विना संन्यासिनोऽपि देहयात्रा न सम्भवेत्यभिप्रायः।।२८।।

**चातकप्रिया हिन्दी व्याख्या**--विद्वान् योगी के निवास का निर्देश करते हुए कहते हैं--वर्षा ऋतु में स्वयं ही उपलब्ध हो जाने वाले तृण और जल की भाँति जिस स्थान में साधनोचित अन्न और पेयादि पदार्थ पर्याप्त मात्रा में स्वयं प्राप्त हों–ऐसे स्थान में निष्काम, अहिंसाप्रधान विद्वान् योगी को निवास करना चाहिए। ऐसा इसलिए भी आवश्यक है, क्योंकि विना भोजन-पानी के शरीर-यात्रा सम्भव नहीं है।।२८।।

तत्राप्येवंविधजनसमीपे वास इत्याह-

**यत्राकथयमानस्य प्रयच्छत्यशिवं भयम्।**
**अतिरिक्तमिवाकुर्वन् स श्रेयान्नेतरो जनः।।२९।।**

**अन्वयः**--यत्र अकथयमानस्य अशिवं भयं प्रयच्छति अतिरिक्तम् अकुर्वन् इव सः श्रेयान् नेतरः।।२९।।

**चातकप्रिया सं० व्या०**--अथात्र केन सह निवासः कार्यो योगिनेति वर्णयन्नाह–**यत्रेति**।। यत्र = यस्मिन् जनसमुदाये, अकथयमानस्य=स्वसिद्धिं माहात्म्यं वा अप्रकाशयतः मौनीभूतस्य यदृच्छालाभसन्तुष्टस्य

सामान्यजीवनस्य आत्मानमिव लोकं पश्यतो जड़पिशाचवल्लोकमाचरतः आत्मज्ञानिनः कृते जनः अशिवं = भयम्, प्रयच्छति = उत्पादयति- अर्थात् जडोऽयमिति मत्वा निरादरं करोति तथा अतिरिक्तम् इव अकुर्वन् = यथा कश्चित् स्थितप्रज्ञलक्षणो ब्रह्मविदिति विदित्वा प्रणामादिपूर्वकमीश्वरधियार्चति तद्वदज्ञानवशात् अतिरिक्तं ब्रह्मविदनुरूपम् अकुर्वन्, न कुर्वन् अर्थात् अवमाननां कुर्वन् भवति यो जनः सोऽस्य ब्रह्मविदः जनस्य कृते श्रेयान् = कल्याणकरो सह निवासयोग्यः, नेतरः = प्रणिपातादिपूर्वकमीश्वरबुद्ध्या तस्य पूजको जनो न श्रेयानिति। तथाह मनुः--

सम्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव।
अमृतस्येव चाकांक्षेदवमानस्य सर्वदा।।

भगवता पराशरेणाप्युक्तम् -

सम्मानना परां हानिं योगर्द्धेः कुरुते यतः।
जनेनावमतो योगी योगसिद्धिञ्च विन्दति।।

सम्मानेन योगविघातो भवतीत्याशयं प्रकाशयतोक्तं भगवता कृष्णेनापि-

न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम्।

चातकप्रिया हिन्दी व्याख्या--आत्मज्ञानी योगी को कैसे लोगों के साथ रहना चाहिये--इसका निर्देश करते हैं--जिस जगह लोग उसके आत्मज्ञान के सम्बन्ध में कोई जानकारी न रखते हुए उसकी पूजा-सम्मान नहीं, अपितु निरादर करें--वही जगह आत्मज्ञानी के लिए निवासयोग्य है, क्योंकि पूजन-सम्मान आदि से आत्मज्ञानी में भी अभिमान का जन्म हो जाता है, जो कि एक दिन पतन का कारण बनता है।।२९।।

कीदृशस्य तर्हि अन्नं भोज्यमित्याह-

यो वाऽकथयमानस्य ह्यात्मानं नानुसंज्वरेत्।
ब्रह्मस्वं नोपहन्याद् वा तदन्नं सम्मतं सताम्।।३०।।

अन्वयः--वा यः अकथयमानस्यं आत्मानं नानुसंज्वरेत् ब्रह्मस्वं नोपहन्यात् तदन्नं सतां सम्मतम्।।३०।।

चातकप्रिया सं० व्या०--आत्मज्ञानिना कस्यान्नं ग्रहीतव्यमित्याह-- यः = पुरुषः, अकथयमानस्य = सर्वोपसंहारं कृत्वा पूर्णात्मना स्थितस्य, आत्मानं = मनः, न = नहि, अनुसंज्वरेत् = संतापयेत्, ब्रह्मस्वम्= ब्रह्मनिष्ठायाः साधनभूतं चैलाजिनग्रन्थादिकम्, नोपहन्यात् = नापहरेत्, तदन्नम् =तस्य =तादृशस्य जनस्य अन्नं =भोजनम्, सताम् = ब्रह्मविदाम्, सम्मतम् = योग्यम् भोज्यत्वेनेति। तथा चोक्तं ब्रह्मस्वविषये--

रत्नहेमादिकं नास्य योगिनः स्वं प्रचक्षते।
कुशवल्कलचैलाद्यं ब्रह्मस्वं योगिनो विदुः।।

असूयादिविरहितस्य श्रद्धापूर्वकं प्रयच्छत एव जनस्यान्नं भोज्यं सतामित्याशयः।।३०।।

चातकप्रिया हिन्दी व्याख्या--जो सज्जन गृहस्थ पुरुष आत्मा में स्थित ज्ञानी को अपने व्यवहार से व्यथित नहीं करते तथा कभी भी ब्रह्मस्व-कुश, चैल, अजिन और पुस्तक आदि का अपहरण नहीं करते, ऐसे पुरुष का श्रद्धापूर्वक अर्पित किया गयां अन्न ही आत्मज्ञानी को ग्रहण करना चाहिए, किसी और का नहीं। भोजन, जो किया जाय, वह श्रद्धासमर्पित हो, असूयारहित व्यक्ति का हो।।३०।।

नित्यमज्ञातचर्या मे इति मन्येत ब्राह्मणः।
ज्ञातीनां तु वसन्मध्ये नैव विद्येत किंचन।।३१।।

अन्वयः--ब्राह्मणः नित्यं अज्ञातचर्या मन्येत ज्ञातीनां मध्ये वसन् नैव किंचन विद्येत।।३१।।

चातकप्रिया सं०व्या--ब्राह्मणः = ब्रह्मवेत्ता, नित्यं = नियमेन, अज्ञातचर्या = गुप्तचर्या, मे = मम, कर्त्तव्येति मन्येत। ज्ञातीनाम्= कुटुम्बिनाम्, मध्ये = सन्निधौ, वसन् =निवसन्नपि नैव, किञ्चन= किमपि, विद्येत = प्रतिपद्येत। अयमाशयः--ब्रह्मवित् पुत्रपत्न्यादिकं विहाय केवलः

स्वात्मनिष्ठः गूढचारी भवेदिति। तथा चाह वशिष्ठः-

यन्न सन्तं न चासंतं नाश्रुतं न बहुश्रुतम्।
जानन्नपि हि मेधावी जडवल्लोकमाचरेत्।।इति।।

श्रुतिरपि कथयति-

कुटुम्बं पुत्रदारांश्च वेदांगानि च सर्वशः।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः।।

अपरोऽर्थः--अज्ञातचर्या = अज्ञाते चक्षुराद्यविषयभूते वाचामगोचरे सर्वान्तरे परे ब्रह्मणि चर्या समाधिलक्षणा निष्ठा मम कर्त्तव्या नहि पुत्रकलत्रादौ स्वदेहादौ ब्राह्मणाद्युपाधौ च इति यो मन्येत स ब्रह्मवित्। तथा च श्रुतिः- "यच्चक्षुषा न पश्यति" इति। अतः अज्ञात एव परे ब्रह्मणि निष्ठा कर्त्तव्येति। उक्तञ्चापि-

क्रोधमानादयोऽनित्या विषयाश्चेन्द्रियाणि च।
ज्ञातयश्च समाख्याता देहिनस्तत्त्वदर्शिनः।।

ज्ञातिः = इन्द्रियम्। ज्ञातीनामिन्द्रियाणां मध्ये वसन् इन्द्रियकर्माणि दर्शनादीनि कुर्वन्नपि नैवमात्मादिरूपेण विद्येत। आत्मनः तत्साक्षित्वात्। तथा च श्रुतिः-"अथ यो वेदेदं जिघ्राणीति स आत्मा" इति। शरीरद्वयतद्धर्मांश्च नात्मरूपेण गृह्णीयादिति।।३१।।

चातकप्रिया हिन्दी व्याख्या--ब्रह्मविद् को चाहिए कि वह कुटुम्बियों के मध्य रहता हुआ भी अपने ब्रह्मज्ञान को व्यक्त न करे। अपने ब्रह्मतेज को साधारण लोगों से छिपा कर रखे, क्योंकि ब्रह्म-साक्षात्कार के बाद उस अनुभव के सम्बन्ध में कोई तर्क-वितर्क न करने वाला ही ब्रह्मज्ञानी कहा जाता है। जैसा कि कहा भी गया है- जानन्नपि हि मेधावी जडवल्लोकमाचरेत्।।३१।।

को ह्येवमन्तरात्मानं ब्राह्मणो मन्तुमर्हति।
निर्लिङ्गमचलं शुद्धं सर्वद्वन्द्वविवर्जितम्।।३२।।

**अन्वयः**--एवं कः ब्राह्मणः निर्लिङ्गम् अचलं शुद्धं सर्वद्वन्द्वविवर्जितम् अन्तरात्मानं मन्तुम् अर्हति।।३२।।

**चातकप्रिया सं० व्या०**--एवम् = उक्तप्रकारेण प्रसिद्धः कः ब्राह्मणः= ब्रह्मविद्, ईदृशीं चर्यां विना बहिर्मुखः सन्, निर्लिङ्गम् = निराकारम्, अचलम् = व्यापकम्, शुद्धम् = केवलम्, सर्वद्वन्द्वविवर्जितम् = सजातीयविजातीयस्वगतभेदशून्यम्, अन्तरात्मानम् = प्रमात्रादिसाक्षिणम्, मन्तुम् = तत्त्वतः ज्ञातुम्, अर्हति = शक्नोति। न कोऽपीत्यर्थः। तथा च सति ब्राह्मणत्वमेव नश्येत। यथा-

**य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया।।३२।।**

**चातकप्रिया हिन्दी व्याख्या**--उपर्युक्त गूढ़चर्या के विना भला कौन-सा ब्राह्मण पुत्र--कलत्रादि में संलग्न रह कर सूक्ष्म, अचल, शुद्ध, रागद्वेषहीन अन्तर्यामी प्रमात्रा परमात्मा को घट, पट आदि विषयों की भाँति जान सकता है? अर्थात् कोई नहीं। परमात्मा सब प्रकार से दुर्बोध है।।३२।।

**योऽन्यथा संतमात्मानमन्यथा प्रतिपद्यते।**
**किं तेन न कृतं पापं चोरेणात्मापहारिणा।।३३।।**

**अन्वयः**--यः अन्यथा सन्तं आत्मानम् अन्यथा प्रतिपद्यते, तेन चोरेण आत्मापहारिणा किं पापं न कृतम्।।३३।।

**चातकप्रिया सं० व्या०**--यः = विषयासक्तः, अन्यथा निर्लिङ्गादि-स्वरूपात्मकम् आत्मानम् अज्ञानात् अन्यथा = कर्त्ता, भोक्ता, सुखी, दुःखीत्यादिरूपेण, प्रतिपद्यते = जानाति, तेन = मूर्खेणानात्मविदा, आत्मापहारिणा = आत्मचोरेण, किं पापम् = कीदृशं पापं महापातकादि सर्वम्,न कृतम्=न सम्पादितम्, स्वाज्ञानेनेति सर्वं पापं कृतमेवेति।उक्तञ्च-

असूर्या नाम ते लोका अन्धेन तमसा वृताः।
ताँस्तु प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः।।

स्मृतिरपि कथयति–**ब्राह्मण्यं प्राप्य लोकेऽस्मिन् मूको वा बधिरो भवेदिति।** अस्तु, देहेन्द्रियादिष्वात्मभावं परित्यज्य परोक्षे ब्रह्मण्येव निष्ठा विधातव्येति।।३३।।

**चातकप्रिया हिन्दी व्याख्या**--सम्पूर्ण प्रपञ्चरहित सर्वशक्तिसम्पन्न सर्वज्ञ अचल परमात्मा को जो विषयी पुरुष श्रुति--प्रतिपादित लक्षण से भिन्न देहादि रूप में जानने की बात कहता है, वह आत्मघाती चोर है। कहना यह चाहिए कि उसने समस्त महापातक आदि पाप किये हैं। अतः सब कुछ छोड़कर ब्राह्मण केवल वागाद्यगोचर अज्ञात ब्रह्म में ही अपनी निष्ठा करे।।३३।।

**अश्रान्तः स्यादनादाता संमतो निरुपद्रवः।**
**शिष्टो न शिष्टवत्स स्याद् ब्राह्मणो ब्रह्मवित्कविः।।३४।।**

**अन्वयः**--स अश्रान्तः अनादाता निरुपद्रवः स्यात् तथा शिष्टः शिष्टवत् न स्यात् , ब्राह्मणः ब्रह्मवित्कविः सम्मतः।।३४।।

**चातकप्रिया सं० व्या०**--आत्मतत्त्वज्ञानस्योपायं कथयति–अश्रान्त इति।। सः = ब्रह्मज्ञानी, अश्रान्तः = संसारश्रमहीनः, अनादाता = आदत्ते इति आदाता, न आदाता अनादाता--अनात्मवस्तुसंग्रहरहितः, शरीरेन्द्रियतद्धर्मविवर्जितः केवलोऽहं साक्षीति यो मन्यते स अश्रान्तः स्यात्। एवमश्रान्तत्वात् निरुपद्रवः = क्रोधहर्षासूयालोभादिसर्वोपद्रवरहितः, सम्मतः = सम्यग् मतं ज्ञानं यस्य सः सम्यज्ज्ञानवान् भवति, स च ब्रह्मनिष्ठः क्रान्तदर्शी कविः भवति। एवं बुधजनेषु शिष्टोऽपि = समादृतोऽपि, शिष्टवत् = विद्वानिव, नाचरेत् = न व्यवहरेत्। मूढवदेव व्यवहरेदित्याशयः। बाल्यवत् तिष्ठासेदिति श्रुतिः।।३४।।

**चातकप्रिया हिन्दी व्याख्या**--शिष्ट, क्रान्तदर्शी ब्राह्मण ब्रह्मवित् आलस्यरहित, अनात्म वस्तु का संग्रह न करने वाला, क्रोध आदि से शून्य, सभ्य समाज में समादृत होने के बाद भी (वह) ब्रह्मज्ञानी

लोक–व्यवहार में शिष्ट की तरह नहीं, अपितु जड़ की भाँति या बालक की भाँति आचरण करे।।३४।।

**ये यथा वान्तमश्नन्ति श्वाला नित्यमभूतये।**
**एवं ते वान्तमश्नन्ति स्ववीर्यस्योपभोजनात्।।३५।।**

**अन्वयः**--यथा श्वालाः वान्तमश्नन्ति एवं नित्यम् अभूतये स्ववीर्यस्योपभोजनात् ते वान्तमश्नन्ति।।३५।।

**चातकप्रिया सं० व्या०**--अगूढचारिणः कुत्सां कुर्वन्निदानीमाह–यथेति।। यथा = येन प्रकारेण, श्वालाः = श्वानः, वान्तम् = उद्गीर्णम्, अश्नन्ति = खादन्ति, एवम् = अनेनैव प्रकारेण, (ब्रह्मविदः, ये) नित्यम् =प्रायः, स्वमहिमानं प्रकाशयन्तोऽगूढचारित्वं भजन्ते, ते = स्वमाहात्म्यख्यापनशीलाः, स्ववीर्यस्य = स्वतपसः, उपभोजनात् = लोकलाभाय प्रयोगात्, वान्तमिव अश्नन्ति। इदं च तेषां वान्ताशनमिव सामर्थ्यप्रकाशनकार्यं भवति अभूतये अकल्याणायैवेत्यर्थः। ब्रह्मवेत्ता लोके गूढः सन्नेव समाचरेदित्यभिप्रायः।।३५।।

**चातकप्रिया हिन्दी व्याख्या**--कुत्ता जैसे अपने ही द्वारा वमन किये हुए पदार्थ को खा लेता है, ठीक वैसे ही अपने पाण्डित्य आदि का प्रदर्शन यदि भोजनादि प्राप्त करने के लिए करता है तो वह मानो वान्त का भक्षण करता है, क्योंकि उसका यह अगूढ़ आचरण केवल अनर्थकारी होता है। भाव यह है कि ब्रह्मवेत्ता होने के बाद लोक में उदासीन जैसा व्यवहार करना ही उचित है। श्रुति भी कहती है–"सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव।।३५।।

**अनाढ्या मानुषे वित्ते आढ्या वेदेषु ये द्विजाः।**
**ते दुर्द्धर्षा दुष्प्रकम्प्या विद्यात्तान् ब्रह्मणस्तनुम्।।३६।।**

**अन्वयः**--ये द्विजाः मानुषे वित्ते अनाढ्याः, वेदेषु आढ्याः, ते दुर्द्धर्षाः दुष्प्रकम्प्याः (अतः) तान् ब्रह्मणस्तनुं विद्यात्।।३६।।

चातकप्रिया सं० व्या०--ये द्विजाः = द्वाभ्यां जन्मसंस्काराभ्यां जाताः ब्राह्मणाः, मानुषे = मानुषादागते, वित्ते = धने पुत्र-कलत्रादौ, अनाढ्याः= अनासक्ताः, सन्ति, वेदेषु (च) = वेदप्रतिपादितेषु अहिंसास्तेय-ब्रह्मचर्यशमादिसाधनेषु, आढ्याः = सम्पन्नाः (सन्ति) ते = तादृशाः द्विजाः, दुर्द्धर्षाः = अजेयाः, दुष्प्रकम्प्याः = विषयप्रभावरहिताः (उक्ताः) अतः तान् = द्विजान्, ब्रह्मणस्तनुम् = ब्रह्मस्वरूपभूतान्, विद्यात् = जानीयात्।।३६।।

चातकप्रिया हिन्दी व्याख्या--जो ब्राह्मण सांसारिक पुत्र, वित्त, कलत्र आदि से हीन होने पर भी वेद–प्रतिपादित अहिंसा आदि धर्मों से सम्पन्न हैं, वे किसी भी वैषयिक प्रभाव से चंचल न होने वाले अजेय द्विज कहलाते हैं। ऐसे ही वेदार्थ–विभूषित ब्राह्मण को ब्रह्म की साक्षात् मूर्ति समझना चाहिए।।३६।।

**सर्वान् स्विष्टकृतो देवान् विद्याद्य इह कश्चन।**
**न समानो ब्राह्मणस्य यस्मिन् प्रयतते स्वयम्।।३७।।**

अन्वयः--यः कश्चन इह सर्वान् स्विष्टकृतः देवान् विद्यात्, यस्मिन् स्वयं प्रयतते, ब्राह्मणस्य समानः न।।३७।।

चातकप्रिया सं० व्या--सर्वेभ्यो यज्ञेभ्यो ब्रह्मज्ञानमेवास्ति वरमिति प्रतिपादयति–सर्वानिति।। यः कश्चन = कश्चित् द्विजः, इह = लोकेऽस्मिन् सर्वान् = सम्पूर्णान्, स्विष्टकृतः = सु ± इष्टम् करोतीति स्विष्टकृत् तान्, सदभिलाषपूरकान्, देवान् = सुरान् "इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः"-इति गीतायाम्। अथवा द्योतनात् प्रकाशनात् देवा अग्न्यादीन्, विद्यात् = जानीयात् -अग्नौ द्रव्यादिप्रक्षेपोद्देश्यत्वेन विजानीयात्, सोऽपि सर्वसुरयजनशीलः, ब्राह्मणस्य = ब्रह्मविदः, न = नहिं, समानः = सदृशः–मानं मतिः ज्ञानं प्रमाणं परिमाणं वा यस्य स समानः। ब्रह्मविदा तुल्यं नित्यं सर्वसुरयाजिनोऽपि माहात्म्यं न भवतीत्याशयः। नैतदाश्चर्यम्। यस्मिन् = देवविशेषे इन्द्रादौ हविषः

उद्देशत्यागेन स्वयं यजमानः फलप्राप्त्यर्थं प्रयतते-"इदमग्नये इदमिन्द्राय"। सोऽपि अग्न्यादिदेवविशेषो ब्रह्मवेत्रा तुल्यो नास्ति का तु कथाऽन्येषाम्। तथा च मोक्षधर्मे-

**ब्राह्मणस्य न सादृश्ये वर्तते सोऽपि किं पुनः।**
**इज्यते येन मन्त्रेण यजमानो द्विजोत्तमः।।इति।।**

मनुरपि व्याहरति-

**ब्रह्मविद्भ्यः परं भूतं न किंचिदिह विद्यते।।३७।।**

**चातकप्रिया हिन्दी व्याख्या**--जो कोई यजनशील व्यक्ति इस संसार में सकल अभीष्ट--प्रदाता इन्द्र आदि देवताओं को जानता है, उनकी उपासना करता है तथा निरन्तर वेदविधि से उन्हीं देवताओं के लिये यज्ञ करता रहता है--वह भी ब्रह्मज्ञानी ब्राह्मण की समानता नहीं कर सकता, यही नहीं, वह देवता भी ब्रह्मवेत्ता के समान नहीं हैं। फिर और की तो बात ही क्या है?।।३७।।

**यमप्रयतमानं तु मानयन्ति स मानितः।**
**न मान्यमानो मन्येत नावमानेऽनुसंज्वरेत्।।३८।।**

**अन्वयः**--तु यम् अप्रयतमानं (देवादयः) मानयन्ति, सः मानितः, मान्यमानः न मन्येत तथा अवमाने न अनुसंज्वरेत्।।३८।।

**चातकप्रिया सं० व्या०**--ब्रह्मवेत्तुरेव पुनराचरणमाह--**यमिति**। यं= ब्रह्मविदम्, तु = किन्तु, अप्रयतमानम् = सर्वकर्मसंन्यासं कृत्वा स्वे महिम्नि स्थितं तूष्णीभूतं गूढचारिणम्, देवादयो विद्वान्सो वा ब्रह्मविदिति ज्ञात्वा, मानयन्ति = आद्रियन्ते, यदि, तदा, सः ब्रह्मवित् तैः मानितः आद्रितः पूजितोऽपि, "अहं सम्मानितः" इतिं न मन्येत। तथा च अवमाने= स्थिप्रज्ञलक्षणानभिज्ञैः कृते तिरस्कारे "अयमज्ञ" इत्थम्भूते, नानुसंज्वरेत् नानुतप्येत। अथवा देवैः सर्वारम्भपरित्यागीति मत्वा सम्मानित एव ब्रह्मविद्भवति। केवलोऽयं "यज्ञादिकर्त्ता" एवंभूतः देवैः स्वीकृतः सन् सः देवानां पशुरेव भवति। तथा च श्रुतिः-"**अथ योऽन्यां देवतामुपास्तेऽ-**

न्योसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्''।।३८।।

चातकप्रिया हिन्दी व्याख्या--सर्वथा मौन होकर अपने को गुप्त रखने वाला ब्रह्मवेत्ता परिव्राजक यदि विद्वान् लोगों के द्वारा पहचाना जाकर सम्मानित हो तो भी अहंकारशून्य रहे। इसी प्रकार यदि लोगों द्वारा विना परिचय के अपमानित हो जाय तो भी क्षोभ न करे। कहने का आशय यह कि मानापमान में एक समान अवस्थित रहने वाला ही ब्रह्मज्ञानी है।।३८।।

लोकस्वभाववृत्तिर्हि निमेषोन्मेषवत्सदा।
विद्वान्सो मानयन्तीह इति मन्येत मानितः।।३९।।

अन्वयः--इह विद्वान्सःमानयन्ति तु मानितः निमेषोन्मेषवत् लोकस्वभाववृत्तिः इति सदा मन्येत।।३९।।

चातकप्रिया सं० व्या०--इह = अस्मिन् संसारे, विद्वांसः = ज्ञातारः, यदि ब्रह्मविदं मानयन्ति = पूजयन्ति, तुं, मानितः = पूजितः ब्रह्मवेत्ता, तेषां सम्मानकर्तृणां विदुषां निमेषोन्मेषवत्=स्वाभाविकी, लोकस्वभाववृत्तिः = परसम्मानदायिनी प्रकृतिः, इति, सदा = नित्यम्, मन्येत। अर्थात् अयं विद्वल्लोकः स्वप्रकृत्यैव मां मानयति, मयि नास्ति मानप्राप्तियोग्यतेति ब्रह्मविदाहंकारशून्येन मन्तव्यम्।।३९।।

चातकप्रिया हिन्दी व्याख्या--इस नश्वर संसार में विद्वान् पुरुष जब किसी ब्रह्मज्ञानी सन्त का सम्मान करते हैं तो उसे यह समझना चाहिए कि यह तो आँखों के स्वाभाविक रूप में खुलने और बन्द होने के समान संसार की सहज प्रवृत्ति (आदत) है। सज्जन सम्मानयोग्य पुरुष का आदर करते हैं और दुर्जन निरादर, निन्दा। इससे कोई लाभ या हानि नहीं होती। अतः इस मानापमान में फँसना श्रेयस्कर नहीं है।।३९।।

अधर्मविदुषो मूढा लोकाः शास्त्रविवर्जिताः।
न मान्यं मानयिष्यन्ति एवं मन्येदमानितः।।४०।।

अन्वयः--अधर्मविदुषः शास्त्रविवर्जिताः मूढाः लोकाः मान्यं न मानयिष्यन्ति-अमानितः एवं मन्येत्।।४०।।

चातकप्रिया सं० व्या०--अधर्मविदुषः = धर्मज्ञानरहिताः, मूढाः अविवेकिनः, शास्त्रविवर्जिताः = शास्त्रेण रहिताः शास्त्रोपदेशशून्याः, लोकाः = सांसारिकाः प्राणिनः, मान्यं = सम्मानपात्रम्, न, मानयिष्यन्ति= आद्रियन्ते, अज्ञत्वात्, अथ च अमान्यमपि मानयिष्यन्ति, अमानितः= अनाद्रितः ब्रह्मवित् पुरुषः, एवम् = मानापमानशून्यः सन्, मन्येत् = उभयोरवस्थयोः समं शान्तियुतो हर्षोद्वेगराहित्यपूर्वकं व्यवहरेदिति।।४०।।

चातकप्रिया हिन्दी व्याख्या--विद्वान् पुरुष अनाद्रित होने पर अपने मन में ऐसी भावना करे कि धर्म के मर्म को न जानने वाले, शास्त्रोपदेश से रहित, विवेकहीन प्राणी कभी भी आदरणीय को पहचान कर आदर-सम्मान नहीं कर सकते, वे तो असम्माननीय का ही सम्मान करते हैं। अस्तु, हर प्रकार से मुझे (ब्रह्मज्ञानी को) मानापमानशून्य होकर व्यवहार करना चाहिए।।४०।।

**न वै मानं च मौनं च सहितौ वसतः सदा।**
**अयं मानस्य विषयो ह्यसौ मौनस्य तद्विदुः।।४१।।**

अन्वयः--वै मानं मौनं च सदा सहितौ न वसतः। अयं मानस्य विषयः, असौ हि मौनस्य तद् विदुः।।४१।।

चातकप्रिया सं० व्या०--सम्प्रति मानस्य विषयोऽन्यो मौनस्य चान्य इति निर्दिशति--न वै मानमिति। वै = निश्चयेन, मानं = सम्मानः, मौनं च = मुनेः कर्म--योगिचर्या च, सहितौ = एकत्र, सदा = सर्वदा, न, वसतः = तिष्ठतः, अयं प्रत्यक्षादीन्द्रियगोचरः प्रपञ्चः संसारः, मानस्य = सम्मानस्य, विषयः = वस्तु, लक्ष्यम्। असौ = परलोकः, मौनस्य= ब्रह्मज्ञानस्य, विषयः अस्तीति, तद्विदुः = सुनिश्चितः। यथा-गीतायाम्- "ओऽम् तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।" एवमेवानुगीतासूक्तम्- ओऽम् तत्सद्विष्णवे चेति सायुज्यानि पदानि वै। इति। अत्र "तत्"

शब्दवाच्यं ब्रह्म--मौनस्य विषयः। मानात् लोकप्राप्तिः मौनाच्च परलोकस्येत्याशयः। यथा हिरण्यगर्भे-

अन्नाङ्गनादिभोगेषु भावो मान इति स्मृतः।
ब्रह्मानन्दसुखप्राप्तिहेतुर्मौनमिति स्मृतम्।।इति।।

चातकप्रिया हिन्दी व्याख्या-मान और मौन--दोनों में विषयभेद है- यह बतलाया जा रहा है। यह दृढ़ता से कहा जा सकता है कि संसार में मान और मौन--दोनों एक समय में, एक व्यक्ति में, एक साथ नहीं रह सकते। मान प्रशंसामूलक होने से बहिमुख करता है और मौन आत्मचिन्तन प्रधान होने से अन्तमुख। मान से संसार में सुख की प्राप्ति होती है, परन्तु मौन परलोक में ब्रह्मानन्द देता है। परमार्थ--ईश्वर--का एकमात्र साधन मौन ही है।।४१।।

**श्रीर्हि मानार्थसंवासात्सा चापि परिपन्थिनी।**
**ब्राह्मी सुदुर्लभा श्रीर्हि विद्याहीनेन क्षत्रिय।।४२।।**

अन्वयः--क्षत्रिय ! मानार्थसंवासात् श्रीः हि, अपि च सा परिपन्थिनी। हि विद्याहीनेन ब्राह्मी श्रीः सुदुर्लभा।।४२।।

चातकप्रिया सं० व्या०--अधुना मानार्थनिवासेऽपवर्गाभावं प्रदर्शन्नाह- श्रीर्हीति।। क्षत्रिय = राजन्! मानार्थसंवासात् = मान एवार्थः प्रयोजनं यस्य तादृशः संवासः तस्मात्, मानप्राप्त्यर्थं नीतिपूर्वकं निवासात् कर्म- सम्पादनात्, श्रीः = धनाभिजनैश्वर्यरूपा लक्ष्मीः, हि = अवश्यं प्राप्ता भवति कर्मानुष्ठानवतः। च = परन्तु, सा = श्रीः, परिपंथिनी = परलोक- विनाशिनी, योगिनां कृतेऽत्यन्तमिष्टघातिनी। यथोक्तं मोक्षधर्मे-"निवन्धिनी रज्जुरेषा"। अनया श्रियाभिभूतो जीवो विषयेष्वेव प्रवर्तते। अत उक्तम्- विद्याहीनेन = प्रज्ञाहीनेन जनेन, ब्राह्मी श्रीः = ब्राह्मीस्थितिरूपा लक्ष्मीः मेधा, सुदुर्लभा = असम्भवा श्रवणगोचरापि नास्ति। ब्राह्मणस्य श्रीस्तु ऋग्यजुःसामात्मिका। यथा श्रुतिः-"सा हि श्रीः अमृता सताम्।" उक्तं च हिरण्यगर्भे-

या नित्या चिद्घनाऽनन्ता गुणरूपविवर्जिता।
आनन्दाख्या परा शुद्धा ब्राह्मी श्रीरिति कथ्यते।।

श्रवणदुर्लभा ब्राह्मी श्रीः कुयोगिनामिति–तथा च श्रुतिः-"श्रवणायापि बहुभिरिति"।।४२।।

चातकप्रिया हिन्दी व्याख्या--मान–प्राप्ति के लिये ही कर्मानुष्ठान करते रहने वाले के लिए ब्राह्मी स्थिति पाना असम्भव है–यह बतलाने के लिए कहते हैं–हे राजर्षि धृतराष्ट्र ! यद्यपि लोक–सम्मान को लक्ष्य बनाकर किया गया कर्मानुष्ठान धन, परिवार इत्यादि के रूप में श्री प्रदान करता है, पर वह श्री बन्धन होने के कारण योगसाधक ब्रह्मविद् का शत्रु है तथा वह ऐश्वर्य परलोक का नाश कर देता है। एक मात्र लौकिक भोगों में ही आसक्ति रखने वाले ऋक् आदि वेदों के रहस्य को जानने की प्रज्ञा प्राप्त नहीं कर पाते। अतः उन्हें मोह से मुक्ति दिलाने वाली ब्राह्मी स्थिति श्रवणगोचर भी नहीं होती।।४२।।

द्वाराणि सम्यक् प्रवदन्ति सन्तो
बहुप्रकाराणि दुराचराणि।
सत्यार्जवे ह्रीर्दमशौचविद्याः
षण्मानमोहप्रतिबन्धकानि।।४३।।

अन्वयः--सन्तः दुराचराणि बहुप्रकाराणि द्वाराणि सम्यक् प्रवदन्ति, सत्यार्जवे ह्रीर्दमशौचविद्याः षट् मानमोहप्रतिबन्धकानि।।४३।।

चातकप्रिया सं० व्या०-सम्प्रति ब्रह्मलक्ष्म्याः प्रवेशद्वाराणि दर्शयति सनत्सुजातो भगवान्–द्वाराणीति।। सन्तः = ब्रह्मवेत्तारः सत्पुरुषाः, ब्रह्मसुखस्य, द्वाराणि = प्राप्तिसाधनानि, बहुप्रकाराणि = अनेकानि, दुराचरणानि = दुःसाध्यानि सन्तीति प्रवदन्ति = निर्दिशन्ति। यथा-सत्यं = यथार्थभाषणम्, आर्जवम् = ऋजुता, ह्रीः =लोकापवादभयम्,

दमः = इन्द्रियनिग्रहः, शौचम् = मृज्जलाभ्यां बाह्यम्, मनसश्च शुद्धिः, विद्या = वेदशास्त्राधिगमः, इति षट् मानमोहप्रतिबन्धकानि।।४३।।

*।।इति चातककृता सनत्सुजातीयस्य प्रथमाध्यायस्य संस्कृतव्याख्या।।*

**चातकप्रिया हिन्दी व्याख्या**--ब्रह्मश्री (ब्राह्मी स्थिति) प्राप्त करने के षट् साधन बतलाये गये हैं, जिनका आचरण अति कठिन है। वे इस प्रकार हैं-१- सत्य, २- अकुटिलता, ३- लज्जा, ४- दम, ५- पवित्रता और ६- अध्यात्मविद्या। यही छः साधन जगत् में मान-मोह के प्रतिबन्धक हैं।।४३।।

*।।इति चातककृत सनत्सुजातीय दर्शन के प्रथम अध्याय की हिन्दी व्याख्या।।*

❑

## अथ द्वितीयोऽध्यायः

धृतराष्ट्र उवाच-

कस्यैष मौनः कतरन्नु मौनं
प्रब्रूहि विद्वन्निह मौनभावम्।
मौनेन विद्वानुत याति मौनं
कथं मुने मौनमिहाचरन्ति।।१।।

**अन्वयः**--विद्वन् कस्य एषः मौनः नु कतरन् , मौनम् इह मौनभावम् प्रब्रूहि। उत विद्वान् मौनेन मौनं कथं याति (तथा) मुने इह मौनम् आचरन्ति।।१।।

**चातकप्रिया सं० व्या०**--सनत्सुजातेन प्रागुक्तं मौनमाहात्म्यं श्रुत्वा तद्विषये जिज्ञासुर्धृतराष्ट्रः पुनः प्रश्नाति--कस्यैष इति।। विद्वन् = महात्मन्, कस्य = कीदृक्स्वभावयुतस्य पुरुषस्य, एषः = भवता प्रागुक्तः, मौनः= मौनाख्यः धर्मो विशेषणम्, मौनस्तु वागाद्युपरतलक्षणः। नु = तथा, कतरन् = "लोकप्रसिद्धेर्वाङ्नियमः", "अमौनं च निर्विद्याथ ब्राह्मणः" इति श्रौतप्रसिद्धेः, अमौनशब्दोक्तात् पाण्डित्यबाल्यापरनाम्नः श्रवणमननाख्याद् द्वयादन्यत् तत्समनियतं निदिध्यासनं वा मौनशब्दोक्तम् -इति तयोर्मध्ये, इह = अत्र कतरन् मौनशब्दवाच्यम, मौनभावम् = तस्य स्वलक्षणं रहस्यं, प्रब्रूहि = सुस्पष्टं कथय, उत = अथवा, विद्वान् = ब्रह्मवित्, मौनेन = तूष्णीभावेन, मौनम् = ब्रह्मपदं, मनःप्राणेन्द्रियक्रियाणां निर्विशोपरमं निर्विकल्पं पदं वा कथं = केन प्रकारेण, याति = प्राप्नोति, मुने = ऋषिवर, इह = लोके, मौनम् = भवतोक्तं मौनं, कथमाचरन्ति। एवं पञ्चसंख्याकाः प्रश्नाः कृता धृतराष्ट्रेण।।१।।

**चातकप्रिया हिन्दी व्याख्या**--प्रथम अध्याय के अन्त में, सनत्सुजात द्वारा मौन का प्रतिपादन सुनकर उसकी महिमा से अभिभूत धृतराष्ट्र

के मन में पञ्चविकल्पात्मक प्रश्न उठे। उन्हीं का वर्णन करते हुए कहते हैं--धृतराष्ट्र ने पूछा--हे मुनिवर! यह वाक्संयमरूपी मौन किस प्रकार के पुरुष का होता है? भाषण न करना और आत्मा में स्थित होना--इनमें से कौन--सा मौन--मौन शब्दार्थ है? हे भगवन्! आप मौन का रहस्य समझायें। क्या वाणी--संयम नामक मौन के द्वारा आत्मप्राप्तिरूपी मौन की प्राप्ति हो सकती है? इस संसार में ब्रह्मजिज्ञासु मौन का आचरण कैसे करते हैं। आप, कृपापूर्वक मेरे इन पाँचों प्रश्नों का उत्तर दीजिए।।१।।

*सनत्सुजात उवाच-*

**यतो न वेदा मनसा सहैनम्**
**अनुप्रविशन्ति ततः स मौनम्।**
**यत्रोत्थितो वेदशब्दस्तथायं**
**स तन्मयत्वेन विभाति राजन्।।२।।**

**अन्वयः**--राजन् ! यतः वेदाः मनसा एनं न अनुप्रविशन्ति ततः मौनम् , तथा अयं वेदशब्दः यत्र उत्थितः सः तन्मयत्वेन विभाति।।२।।

**चातकप्रिया सं० व्या०**--धृतराष्ट्रेण मौनविषये पृष्टः सनत्सुजातो मौनशब्दस्यार्थं स्पष्टयति--यतो नेति।। मौनशब्देन ब्रह्म बोध्य इति चेत् कथं विश्रुतवागाद्युपरतिलक्षणं मौनशब्दार्थं परित्यज्यं ब्रह्मोच्यते भवतेति चेन्न, यतः = यस्मात्, वेदाः = ऋगादयः, मनसा = मन इति सकलेन्द्रियोपलक्षणम्, अस्तु बाह्यान्तःकरणैः सह, वाग्रूपा वेदा, एनम् = परमात्मानम्--सर्वाधिष्ठानं--सर्वप्रभासकं, न = नहि, अनुप्रविशन्ति = इदमित्थन्तया प्रतिपादयितुं शक्नुवन्ति। तथा च श्रुतिः-"यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति"। ततः = तस्मात् हेतोः, मौनम्= वाङ्मनसातीतं ब्रह्मैव मौनशब्दार्थः। लोकोऽयं मानस्याज्ञानस्य विषयः परलोकश्च मौनस्य। अतः ब्रह्मविद्यापि मौनशब्देनोच्यते।

स चायं परमात्मा किंलक्षण इत्यत्राह–यत्र = यस्मिन कारणे परमात्मनि, उत्थितः = समुद्भूतः, वेदशब्दः = वेदश्चासौ शब्दः, वेदानां शब्दो वा अथवा ज्ञापकः प्रमाणभूतः वेदशब्दः परमात्मा, अथवा यस्मिन्नर्थे वाचकत्वेन लक्षकत्वेन वावस्थितः वेदशब्दः। वेदादिशास्त्रं ज्ञापकप्रमाणं ब्रह्मण इति प्रतिपादितं भगवता शङ्करेण ब्रह्मसूत्रे। शब्दाभिधेयो ज्ञानरूपोऽसाविति ब्रह्मणः तटस्थलक्षणम्।

अथ ब्रह्मणः स्वरूपलक्षणम्--वेदशब्दप्रतिपाद्यं ब्रह्म, तन्मयत्वेन प्रतिभाति। प्राचुयार्थे चात्र मयट्। अथवा स्वार्थे मयट् । तदर्थः-प्रचुरं ज्योतिरेव अथवा ज्योतिप्रचुरमित्यर्थे स्वप्रकृत्यर्थापेक्षयान्यस्याल्पत्वस्यावश्यं सत्वापेक्षया ब्रह्मणि जडत्वाल्पत्वस्य नाशङ्का कार्या, समस्तजड़-समूहापेक्षया प्राचुर्यस्य ज्योतिषि विवक्षणात् । स्वार्थिकमयट्पक्षे तु न काचित् शङ्का। तत्र नित्यं वृद्धशरादिभ्य इत्यत्र नित्यमिति योगविभागात् "मयट्" स्वार्थे सिद्ध्यति। ननु तत्पदेन ज्योतिरेव कथं गह्यत इति चेत् , न, वेदशब्द इत्यत्र वेदस्य प्रकृतस्य तत्पदेन परामर्शात्। ज्योतिर्ज्ञानम्। तन्मयः ज्ञानमयः। एवञ्च परमात्मा ज्योतिस्वरूपो विभाति। स्वयम्प्रकाशः परमात्मा। अस्माकं विभाति। अतः वांचामगोचरः परमात्मा संविद्रूपः। परमात्मा संविद्रूप एवेति कथमवगम्यते। तत्राह–तन्मयत्वेनेति। ज्योतिर्मयत्वेनैवास्माकं विभाति = भासते। अनुभवेऽस्मिन् अविश्वासो न कर्त्तव्यः। परमात्मा श्रुतिस्मृतीतिहासपुराणादिषु ज्योतिर्मयत्वेन प्रतीयते।-श्रुतिः-"तद्देवा ज्योतिषाम्"।

गीतायां कथयति कृष्णः--ज्योतिषामपि तज्ज्योतिः तमसः परमुच्यते।

अयमत्र विशेषः--वेदशब्देन वेदस्य सारभूतः प्रणवः। क्रम एवम्-भूरिति ऋग्वेदादजायत, भुव इति यजुर्वेदात्, स्वरिति सामवेदात्, तानि शुक्राणि अभितपन् तेभ्यश्च अभितप्तेभ्यो अकारः, उकारः, मकारश्चेति क्रमशः त्रयो वर्णा जाताः। एतद् "ओऽम्" तान् त्रीन् वर्णान् एकधा समचरत् (इति बह्वृचब्राह्मणे) प्रणवस्य च तस्य "ओऽम्

इत्येतदक्षरमिदं सर्वम्" इति सार्वात्म्यश्रुते:। तन्मात्राणां च अकारोकार-मकाराणां क्रमशः स्थूलसूक्ष्मकारणप्रपञ्चवाचकानां वाच्यवाचकयोरभेदात् पूर्वपूर्वस्योत्तरोत्तरत्र प्रविलये गुरूक्तयुक्त्या क्रियमाणे स्थूलस्य प्रपञ्चस्य सूक्ष्मे लवणोदकन्यायेन प्रविलापो भवति। सूक्ष्मस्य च कारणे कारणस्य च तुरीयेऽर्धमात्रवाच्येऽमात्राख्ये "शिवमद्वैतं चतुर्थं मन्यते" इति श्रुतेः। समाप्ताखिलद्वैतभाने वाङ्मनसातीते प्रविलयो भवति। अस्तु प्रणवाख्य-शब्दमयत्वेन तन्माध्यमेन वाङ्मनसातीतं वस्तु भातीति समुचितम् ।।२।।

चातकप्रिया हिन्दी व्याख्या--महर्षि सनत्सुजात राजर्षि धृतराष्ट्र की आशङ्काओं का समाधान करते हुए बोले--हे राजन्! वाणीरूप वेद मन के सहित, उस ब्रह्म में प्रवेश करने से रह जाते हैं अर्थात् जो मन और वाणी से अगोचर है, वह ब्रह्म है और तुम उसी ब्रह्म को मौन जानो। उसी ब्रह्म (मौन) से वैदिक और लौकिक शब्दसमूह पैदा हुआ है। ब्रह्म ही शास्त्रों की योनि है। उसी शास्त्र से उसका (ब्रह्म का) ज्ञान होता है। जैसाकि श्रुति में भी कहा गया है-"यस्य निःश्वसितं वेदाः।" परमेश्वर तन्मयतापूर्वक ध्यान करने से प्रकाश में आते हैं। पुरुष श्रवण, मनन तथा निदिध्यासन के द्वारा भूयो भूयः आत्मचिन्तन करते हुए निर्विकल्पक समाधि की दशा में ही उस वाङ्मनसातीत परब्रह्म की अनुभूति कर पाता है। यही "मौन" की अवस्था है और इसे ही ब्राह्मी स्थिति कहा जाता है--

**सैषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।--गीता।।२।।**

*धृतराष्ट्र उवाच-*

**ऋचो यजूंष्यधीते यः सामवेदं च यो द्विजः।**
**पापानि कुर्वन् पापेन लिप्यते न स लिप्यते।।३।।**

अन्वयः--यः द्विजः पापानि कुर्वन् ऋचः यजूंषि च यः सामवेदम् अधीते सः पापेन लिप्यते वा न लिप्यते।।३।।

**चातकप्रिया सं०व्या०**--यः = विशिष्टः, द्विजः = ब्राह्मणादिः, पापानि= शास्त्रलोकवर्जिताचरणानि, कुर्वन् = आचरन्, स्वेच्छापरेच्छाभिः अपुण्यजनकानि कर्माणि सम्पादयन्, ऋचः, यजूंषि सामवेदमथर्वणं च, (चकारेणाथर्ववेदस्य ग्रहणम्), अधीते =पठति, सः = वेदपाठी, पापेन = अपुण्येन, लिप्यते = लिप्तो भवति, अथवा न लिप्यते=वेदाध्ययनेन पूयते। "मौन"शब्दस्य ब्रह्मविषयकार्थबोधानन्तरमस्याः शङ्कायाः को हेतुरिति चेदुच्यते--मौनशब्दस्यार्थे ब्रह्मणि वेदानुप्रवेशं मत्वा, वेदः स्वर्गादिप्राप्तिसाधनमित्यादि सनातनं प्रलापं विज्ञाय, वेदश्चेत् पापान्निवारणेऽनीशस्तर्हि नानुष्ठातव्य इति शङ्कोत्थानभूमिरिति।।३।।

**चातकप्रिया हिन्दी व्याख्या**-धृतराष्ट्र ने मौन--शब्दार्थ को सुनने के बाद शङ्का की कि हे भगवन् ! जो द्विज ऋक् , यजुः, साम और अथर्व वेद का ज्ञाता होने के बाद भी शास्त्रनिषिद्ध अपुण्यजनक पापकर्म करता है, वह पाप से प्रभावति होता है अथवा वेदज्ञान उस पाप के प्रभाव को नष्ट कर देते हैं।।३।।

*सनत्सुजात उवाच-*

**नैनं सामान्यृचो वाऽपि यजूंषि च विचक्षण।**
**त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहम्।।४।।**

**अन्वयः**--विचक्षण! सामानि च ऋचः यजूंषि वापि एनं पापात् कर्मणः न त्रायन्ते, अहं ते मिथ्या न ब्रवीमि।।४।।

**चातकप्रिया सं० व्या०**--विचक्षण = विद्वन् !, सामानि = सामवेदः, ऋचः = ऋग्वेदस्य पाठाः, यजूंषि = यजुर्वेदस्य चापि मन्त्राः, एनम्= प्रतिषिद्धाचारिणम्, पापात् कर्मणः = पापाचरणात्, न = नहि, त्रायन्ते = रक्षन्ति, अहम् = सनत्सुजातः, ते = त्वाम्, मिथ्या = असत्यं, न हि, ब्रवीमि = कथयामि। अयमाशयः--यः पुरुषो निषिद्धं कर्म सम्पादयन् ऋग्वेदादीन् बहुशोऽपि पठति तस्य परित्राणं पापकर्मणस्ते वेदा न कुर्वन्ति।

**चातकप्रिया हिन्दी व्याख्या**--सनत्सुजात ने धृतराष्ट्र से कहा-हे विद्वन् राजर्षि ! तुमसे सत्य बात कहता हूँ, सुनो ! जो पुरुष निषिद्ध कर्मों का आचरण करते हुए ऋग् आदि चारो वेदों का अध्ययन करता है, उसकी रक्षा वेद नहीं करते। अर्थात् पाप-कर्म का फल वेदपाठी को भी अवश्य भोगना पड़ता है। वेदाध्ययन से पाप का भोंग समाप्त नहीं होता। वेद के अध्ययनं का फल पवित्र आचरण वाला ही प्राप्त करता है। आचारहीनं न पुनन्ति वेदाः।।४।।

**न छन्दांसि वृजिनं तारयन्ति**
**मायाविनं मायया वर्तमानम्।**
**छन्दांस्येनं प्रजहन्त्यन्तकाले**
**नीडं शकुन्ता इव जातपक्षाः।।५।।**

**अन्वयः**--छन्दांसि मायया वर्तमानं मायाविनं वृजिनात् न तारयन्ति, जातपक्षाः शकुन्ता इव नीडं छन्दांसि एनम् अन्तकाले प्रजहन्ति।।

**चातकप्रिया सं० व्या०**--वेदाः किं कुर्वन्तीत्यस्योत्तरं ददाति--छन्दांसि= ऋगादयो वेदाः, मायया = छलेन, वर्तमानं = व्यवहरणशीलं, मायाविनं= धर्मध्वजं, वृजिनं = पापकारिणं धर्मनास्तिकं, अधीतवेदाङ्गमपि, वृजिनात् = पापात्, न, तारयन्ति = रक्षन्ति। पुनः किं करिष्यन्ति? इति चेदुच्यते- जातपक्षाः = समुत्पन्नपक्षाः सन्तः, पक्षिणः = शकुन्ताः, इव = यथा, नीडं = कुलायं स्वाश्रयं, छन्दांसि = वेदाः, एनम् = स्वाश्रयभूतं वेदपाठकं पापाचारिणम्, अन्तकाले = मृत्युकाले, प्रजहन्ति = त्यजन्ति। मौनाभावेऽनभ्यासादन्ते छंदास्येव न स्फुरन्ति। अतः "अथागमो यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति" इति वचनस्य, "यं यं वापि स्मरन्भावम् " इति स्मृतेश्च मिथ्यात्वप्रसङ्गापत्तिः न जायते।।५।।

**चातकप्रिया हिन्दी व्याख्या**--वेद और वेदार्थ जानने पर भी जो माया के वशीभूत होकर कपटपूर्वक, अपने को शरीराध्यस्त मान कर ही आचरण करता है, ऐसे मिथ्याचारी का उद्धार वेद नहीं

करते। फिर क्या करते हैं--इसका उत्तर देते हुए कहते हैं--पक्षी, पंख आने के बाद जैसे घोंसला छोड़ कर उड़ जाते हैं, वैसे ही वेद उसकी मृत्य के समय (उसका)परित्याग कर देते हैं। वेदों का मरने वाले से कोई सरोकार नहीं रहता। केवल अच्छे--बुरे आचरण से उत्पन्न पुण्य और पाप ही मरने वाले के साथ जाते हैं।।५।।

**न चेद्वेदा वेदविदं त्रातुं शक्ता विचक्षण।**
**अथ कस्मात् प्रलापोऽयं ब्राह्मणानां सनातनः।।६।।**

**अन्वयः**--विचक्षण चेत् वेदाः वेदविदं त्रातुं न शक्ताः, अथ कस्मात् ब्राह्मणानां अयं सनातनः प्रलापः।।६।।

**चातकप्रिया सं० व्या०**--श्रीसनत्सुजातोक्तमेवं ऋगादीनां पापपरिरक्षणासामर्थ्यं विज्ञाय तेषु वृथात्वमाशङ्क्य धृतराष्ट्रः प्रश्नाति-हे विद्वन्! यदि क्रियार्थाः वेदाः यदि वेदविदं = स्वाध्येतारं त्रातुं = रक्षितुं, न = नहि, शक्ताः = समर्थाः कथम् ?-वेदस्य सम्बन्धे एवं श्रूयते यत् काम्यानां कर्मणां वेदविधिना सम्पादनेन पितृलोकस्य प्राप्तिः, संध्यावन्दनादिकस्य नित्यस्य कर्मणः सम्पादनात् न किमपि फलमकरणे च प्रत्यवायः, निषिद्धानामाचरणेन अनर्थाप्तिः, एवं वेदोपलब्धानां पित्रादिलोकानामपि यावत्पुण्यं स्थितिः पुनश्च संसारप्राप्तिरेव भवति। नैमित्तिकानामपि कर्मणां निमित्तनिवर्तनमेव फलमिति वेदाः संसारात् परित्राणं कर्त्तुमशक्ताः। परित्राणं तु त्रिविधदुःखस्य आत्यन्तिकनिवृत्तिः। एवं यदि वेदात् संसारनिवृत्तिर्न भवति तर्हि वेदरूपः ब्राह्मणानां सनातनः प्रलापो व्यर्थ एवास्ति। ब्राह्मणाः कथमशक्तमपि वेदं पुरुषार्थसाधने पठन्ति? अत्र दुःखपरित्राणाशक्तत्वादेव प्रलाप इत्युक्तम्। ननु वेदानां धर्मार्थकामसिद्धिहेतुत्वे सत्यपि कथं प्रलापत्वं सिद्ध्यति स्वर्गकामो यजेदिति प्रमाणात्। वेदोक्तविधिना यज्ञानुष्ठानेन जायत एव स्वर्गादिप्राप्तिः। अतो वेदाः स्वर्गादीष्टसाधनत्वमावहन्त्येव इति नास्ति शङ्का धृतराष्ट्रस्य। वेदा कालान्तरे क्षयिष्णु स्वर्गादिप्राप्तिरूपं फलं ददाति। स्वर्गादिश्च

संसारबन्धहेतुत्वमुत्पादयति। अतो वेदोऽपि संसारबन्धहेतुरिति मत्वा नानुष्ठातव्या वेदाः। स्वर्गादिकामो वेदानुष्ठानं करोतु। तत्कृते सार्थकताऽस्त्येव। मोक्षकामस्तु तदनुष्ठानविरतो भवेदिति।

परन्तु नेदं वक्तव्यम्। वेदा न केवलं स्वर्गादिसाधनभूताः, अपितु मोक्षसाधनत्वमपि तेषाम्। सकामानां कृते तेषां स्वर्गसाधनत्वं निष्कामानां कृते तु मोक्षसाधनतैव। निष्कामेन ज्ञानिनानुष्ठीयमानानि वेदबोधितकर्माणि चित्तशुद्ध्यर्थमेव भवन्ति। कर्मराशेः उपासनायाश्च आत्मज्ञानप्राप्ति-साधनभूतज्ञानसाधनान्तःकरणपरिशुद्धिद्वारेण परम्परया मोक्षे एवो-पादेयता। स्वर्गादिस्त्ववान्तरं फलं यज्ञादीनाम्। यथा-

अनन्दा नाम ते लोका अन्धेन तमसावृताः।
तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधा जनाः।।

अनेन कठोपनिषन्मन्त्रेण तात्पर्यमिदं प्रकाशते।

कृतकृत्यता त्वात्मज्ञानेनैव साधकजीवस्य। यथा-"आत्मानं चेद्विजा-नीयात् अयमस्मीति पूरुषः। किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्।।" इति। पुनश्च "य एतद्विदुरमृतास्ते भवन्ति। अथेतरे दुःखमेवापियन्ति" अनेनापि आत्मविदोऽमृतत्वप्राप्तिर्निश्चीयते। अपरा विद्या पुरुषार्थसाधिका न भवत्यपि तु परैव स्वयमेव श्रुतिरुद्घोषयति-

"प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरा मृत्यू ते पुनरेवापियन्ति।।"

एवं परमार्थसाधकत्वं विस्मृत्य स्वर्गादिसाधकत्वमेव वेदानां स्वीकुर्वन्ति तान् मानिनः रक्षितुं वेदा असमर्थाः। अन्यथा वेदानां परमपुरुषार्थ मोक्ष एवेति।।६।।

**चातकप्रिया हिन्दी व्याख्या**--धृतराष्ट्र ने कहा-हे विद्वन् ! यदि वेद अपने अध्येता की अन्त समय में रक्षा नहीं कर सकते तो उनके

स्वाध्याय एवं उनमें विहित यज्ञादि के विषय में वेदविद् अनादिकाल से वृथा प्रलाप(बकवास) क्यों करते आ रहे हैं?।।६।।

*सनत्सुजात उवाच-*

**तस्यैव नामादिविशेषरूपै-**
**रिदं जगत् भाति महानुभाव।**
**निर्दिश्य सम्यक् प्रवदन्ति वेदा-**
**स्तद् विश्ववैरूप्यमुदाहरन्ति।।७।।**

**अन्वयः**--महानुभाव तस्यैव नामादिविशेषरूपैरिदं जगत् भाति। तथा वेदाः सम्यक् निर्दिश्य प्रवदन्ति, तत् विश्ववैरूप्यम् उदाहरन्ति।।७।।

**चातकप्रिया सं० व्या०**--सनत्सुजातो धृतराष्ट्रस्य वेदवृथात्वसम्बन्धिनीमाशङ्कामपोहमानो वदति--**तस्यैवेति**।। महानुभाव! = जिज्ञासो विद्वन्, तस्यैव = परमात्मनः एव, नामादिविशेषरूपैः = मायाशक्त्या परिकल्पितैर्नानानामरूपैः, इदं = करणैरनुभूयमानं, जगत् = चराचरात्मकः संसारः, भाति = शोभते प्रकाशते च। कथम् ? श्रुतिश्चात्र प्रमाणम् -"इन्द्रो मायाभिः पुरुरूप ईयते" इति। मायया विरचितं बहुरूपं निर्दिश्य = दर्शयित्वा, तस्यैव = परमात्मनः, सम्यग्रूपं = समग्रं जगदाख्यं रूप "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् " इत्यादिना वाक्येन वेदाः = श्रुतयः, प्रवदन्ति = प्रकर्षेण-भूयोभूयो वदन्ति व्याहरन्ति। इदं तथ्यं वेदेषु नैकत्रापि तु बहुत्र प्रकटीभवति। यथा-एते मन्त्राः- "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च" आत्मवदस्य जगतोऽपि मूर्तामूर्तात्मकं स्वरूपं निर्दिश्य पुनः परमात्मनः समग्ररूपम् -"नेति नेतीति"। तथा "आत्मनः आकाशः सम्भूतः" इति आकाशादि पृथिव्यन्तं परमात्मनः एव कार्यं निर्दिश्य कोशकथनद्वारा तस्यैव सम्यक्स्वरूपं "यतो वाचो निवर्तन्ते"इत्यादिना गिरन्ति। "अधीहि भगव" इत्यादिना नामादिप्राणान्तं विश्वं व्याहृत्य "यत्र नान्यत् पश्यति" इत्यादिना परमात्मनः एव स्वे महिम्नि स्थितं तमसः परं भूमानं सम्यग्रूपं वेदा वदन्ति। महामुनिः

पाराशरोऽपि समर्थयति ब्रह्मजगतोः स्वरूपवैरूप्यम् -

प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंमितम्।।
तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम्।
विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः।।इति।।७।।

चातकप्रिया हिन्दी व्याख्या--सनत्सुजात जी ने कहा - हे सहृदय जिज्ञासु धृतराष्ट्र ! यह सारा जड़--जंगमात्मक जगत् परमात्मा की माया से रचित होने के कारण उसके ही नाम और रूपों से विभासित हो रहा है। जगत् मिथ्या है। इसकी केवल प्रतीति होती है। सभी पदार्थों में चेतन रूप से एक ही ईश्वर प्रभासित है। इस प्रकार सम्पूर्ण वेद, स्मृतियाँ और शास्त्र बार-बार इस बहुरूपी विश्वात्मक परमात्मा का निर्देश करते हैं-"इन्द्रो मायाभिः पुरुरूप ईयते।" परन्तु वही वेदादि अन्ततः यह भी प्रतिपादित करते हैं कि वह परमात्मा इस प्रतीत होने वाले जगत् से सर्वथा विलक्षण भी है। वह वाणी, मन और कर्म से अतीत-अर्थात् अनिर्वचनीय है।।७।।

तदर्थमुक्तं तप एतदिज्या
ताभ्यामसौ पुण्यमुपैति विद्वान्।
पुण्येन पापं विनिहत्य पश्चात्
स जायते ज्ञानविदीपितात्मा।।८।।

अन्वयः--तदर्थं तपः इज्या उक्तम् । विद्वान् पुण्येन पापं विनिहत्य स ज्ञानविदीपितात्मा जायते।।८।।

चातकप्रिया सं० व्या०--सम्प्रति परमेश्वरबुद्ध्यानुष्ठीयमानानां तदुपलब्धिसाधनज्ञानापेक्षितशुद्धिद्वारेण पारम्पर्येण पुरुषार्थत्वं परेषां संसारानर्थहेतुत्वेनापुरुषार्थहेतुत्वेनापुरुषार्थत्वञ्चेति श्लोकेनानेन दर्शयति- तदर्थमिति।। (वेदेन) तदर्थम् = तत् विश्वस्मादभिन्नं ब्रह्म तस्मै तत्राप्युद्देशेन

कृतम्, एतत् तपः = कृच्छ्रचान्द्रायणादि, ध्यानधारणादि, इज्या= ज्योतिष्टोमादि च, उक्तम् = निर्दिष्टम्। यथा-"तपसा ब्रह्म विजिज्ञासस्व"। तत्र क्रमं कथयति-पुण्येन = इज्यातपोभ्यां जातेन पुण्येन विद्वान्= पूर्वोक्तविनियोगविद् , ईश्वरार्थं कर्मानुतिष्ठन् कर्मजन्यापूर्वसंयुक्तो भूत्वा, पापं = पुराकृतं कल्मषं, विनिहत्य = क्षपयित्वा सः = निष्पापः, ज्ञानविदीपितात्मा = ज्ञानेन ब्रह्माकारया चित्तवृत्त्या विदीपितात्म प्रकाशितसच्चिदानन्दाद्वितीयब्रह्मात्मतत्वो, जायते = भवति। एतेन- इज्यातपसी नहि साक्षान्मोक्षहेतुत्वं निर्वहतः तथा च ज्ञानकर्मणोः समुच्चयोऽपि भवितुं न शक्नोतीति वेदितव्यम्।।८।।

**चातकप्रिया हिन्दी व्याख्या**--हे धृतराष्ट्र ! वेदों में तप, उपासना, ध्यान और यज्ञ आदि का विधान ईश्वर की प्राप्ति के लिए किया गया है-ऐसा जानो । श्रोत्रिय ब्राह्मण वेदोक्त तप और ज्योतिष्टोमादि का ईश्वरार्पण बुद्धि से अनुष्ठान करके "अपूर्व" प्राप्त करता है। पुनः उस अपूर्व से पुण्य की उत्पत्ति होती है और फिर उस पुण्य से उस अनुष्ठाता के समस्त संचित पाप नष्ट हो जाते हैं। पापनाश से अन्तःकरण ज्ञान से प्रकाशित हो जाता है। वह ज्ञान सच्चिदानन्दाद्वितीय ब्रह्म का स्वरूप व्यक्त कर देता है। इस प्रकार तप और यज्ञ ब्रह्म--प्राप्ति के परम्परया साधन बन जाते हैं। ज्ञान और कर्म का समुच्चय नहीं है-यहाँ यह भी रहस्य समझना चाहिए।।८।।

**ज्ञानेन चात्मानमुपैति विद्वान्**
**अथान्यथा वर्गफलानुकांक्षी।**
**अस्मिन् कृतं तत्परिगृह्य सर्व-**
**ममुत्र भुङ्क्ते पुनरेति मार्गम्।।९।।**

**अन्वयः**--अथ विद्वान् ज्ञानेन आत्मानमुपैति च अन्यथा वर्गफलानुकांक्षी अस्मिन् कृतं तत् परिगृह्य अमुत्र सर्वं भुङ्क्ते। पुनः मार्गं एति।।९।।

**चातकप्रिया सं० व्या०**--अथ = तदनन्तरम्, विद्वान् = आत्मतत्ववेत्ता,

ज्ञानेन = ब्रह्माकारया चेतोवृत्त्या, आत्मानं = परमात्मानम्, उपैति= प्राप्नोति, चान्यथा = आत्मज्ञानाभावेन, अनात्मनि सांसारिके नश्वरे वस्तुनि स्वर्गादौ पुरुषार्थत्वबुद्ध्या, वर्गफलानुकांक्षी = वर्गः इन्द्रियं तत्फलम् तदनुकांक्षी स्वर्गादिफलानुकांक्षी सन्, अस्मिन् = लोके, कृतम्, तत्= यज्ञादिकम्, परिगृह्य = संगृहीत्वा, अमुत्र = परलोके, सर्वं = पुण्यं पापं च, भुङ्क्ते = लभते। पुनः = ततः कर्मशेषेण, मार्गं = संसारमार्गम्, एति = उपैति। यथा श्रुतिः = "तस्मिन् यावत् सम्पातमुषित्वा अथैत-मेवाध्वानं पुनर्निवर्तन्ते।" "तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे।" सम्पतत्यनेनेति सम्पातः। आत्मप्राप्तिरेव जीवस्य परमः पुरुषार्थः।

यथोक्तम् -

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्।।९।।

चातकप्रिया हिन्दी व्याख्या--हे राजन् ! इसके बाद (चित्त--शुद्धि के बाद) वह विद्वान् अन्तःकरण में प्रकाशित ज्ञान के द्वारा परमात्मा को प्राप्त कर लेता है। किन्तु सकाम भाव से यज्ञादि कर्म करने वाले फल (स्वर्गादि) भोगने की इच्छा रखने के कारण इस संसार में किये गये सारे कर्मों को साथ लेकर परलोक में (स्वर्ग या नरक में) उनका फल--सुख या दुःख--भोगते हैं तथा फल--भोग पूर्ण हो जाने पर पुनः संसार में जन्म लेते हैं। इस प्रकार सकाम कर्म करने वाले की जन्म-मृत्यु-परम्परा बराबर बनी रहती है।।९।।

अस्मिँल्लोके तपस्तप्तं फलमन्यत्र भुज्यते।
ब्राह्मणानां तपः स्वृद्धमन्येषां तावदेव तत्।।१०।।

अन्वयः-अस्मिन् लोके तप्तं तपः, फलं अन्यत्र भुज्यते। परन्तु ब्राह्मणानां तपः स्वृद्धम्, अन्येषां तत् तावदेव।।१०।।

चातकप्रिया सं० व्या०--इदानीं विदुषोऽविदुषश्च कर्मफलभेदमाह-अस्मिन्निति।। अस्मिन् लोके = मर्त्यलोके, यत् तप्तम् = कृतम्, तपः=

यज्ञोपासनादि, तस्य फलम् = स्वर्गादि, अन्यत्र = देवलोके, भुज्यते= प्राप्यते इति तावत् सर्वेषां समानम्। (परन्तु) ब्राह्मणानां = ब्रह्मविदां निष्कामकर्मानुष्ठातॄणाम्, तपः = तपोऽनुष्ठानम् , स्वृद्धम् = अतीवसमृद्धं आत्मसाक्षात्कारसहयोगि भवति। यथा श्रुतिः-"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति।" अन्येषां = अविदुषां विषयाकाँक्षिणाम्, तत् = कर्मानुष्ठानफलम्, तावदेव = तावन्मात्रफल-साधनं, नहि ज्ञानसाधनं भवितुमर्हतीति।।१०।।

**चातकप्रिया हिन्दी व्याख्या**--हे राजन् ! सामान्यतया यही नियम है कि इस लोक में की गई तपस्या का फल दूसरे लोक में (जन्म में) मिलता है। किन्तु ज्ञानी निष्काम भाव से की गई तपस्या का फल इसी लोक में आत्मसाक्षात्कार के रूप में प्राप्त करता है। अतः सकामी की अपेक्षा निष्कामी द्वारा सम्पादित कर्म का फल बहुत अधिक है। ब्रह्मज्ञानियों का ब्रह्म--साक्षात्काररूपी फल अनन्त काल तक रहने वाला होता है, किन्तु सकाम उपासकों का फल (स्वर्गादि) थोड़े समय तक (पुण्य तक) रहता है, उसके बाद सकाम अनुष्ठाता पुनः संसार में जन्म लेने और मरने की परम्परा का पालन करने के लिए विवश हो जाता है।।१०।।

***धृतराष्ट्र उवाच-***

**कथं समृद्धमप्यृद्धं तपो भवति केवलम्।**
**सनत्सुजात तद्ब्रूहि कथं विद्यामहं प्रभो।।११।।**

**अन्वयः**-सनत्सुजात केवलं तपः समृद्धं कथं भवति। प्रभो, अहं कथं विद्याम्, तद् ब्रूहि।।११।।

**चातकप्रिया सं० व्या०**--अविदुषः असमृद्धं तपः, विदुषश्च समृद्धं तपः- इति ऐकमेव तपः कथं केवलं शुद्धमिति तपसो द्वैविध्यं केन प्रकारेण जायते सर्वं मां धृतराष्ट्रं ब्रूहीति प्रश्नो धृतराष्ट्रस्य।।११।।

**चातकप्रिया हिन्दी व्याख्या**--हे प्रभो, विद्वान् का तप समृद्ध और

अज्ञानी का असमृद्ध-यह एक ही तप का दो. फल–भेद कैसे होता है-कृपा कर मुझे बतलाएँ।।११।।

*सनत्सुजात उवाच-*

**निष्कल्मषं तपस्त्वेतत्केवलं परिचक्षते।**
**एतत्समृद्धमप्यृद्धं तपो भवति नान्यथा।।१२।।**

अन्वयः--एतत् तपः निष्कल्मषं केवलं परिचक्षते। एतत् समृद्धम् ऋद्धम् भवति, अन्यथा न।।१२।।

चातकप्रिया सं०व्या०--एतत् = इदम्, निष्कल्मषं = कल्मषं कामः श्रद्धादिशून्यत्वम्, निर्गतं कल्मषं यस्मात् तादृशं निर्मलं श्रद्धायुतं, तपः = तपस्या, उपासनादि, केवलम् = कैवल्यस्य मोक्षस्य साधनं, अस्य सर्वस्य प्रपञ्चस्य वा निमित्तम्, परिचक्षते = उच्यते। यथाह भगवान् उशना-

गुणसाम्ये स्थितं तत्त्वं केवलं त्विति कथ्यते।
केवलादेतदुद्भूतं जगत्सदसदात्मकम्।।इति।।

तदेव = एतदेव, केवलं तपः, समृद्धमपि = श्रद्धाद्युपेतम् अपि सकामं चेत् समृद्धं भवित। नान्यथा = सकल्मषं चेत् केवलं दम्भार्थमेव कृतं स्यात् तदा समृद्धम् अपि ऋद्धं भवति। तथा च श्रुतिः—यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति।।इति।।१२।।

चातकप्रिया हिन्दी व्याख्या--सनत्सुजात ने कहा-हे राजन् ! तुम जिस तप के विषय में जानना चाहते हो, वह तप दम्भ आदि से रहित, श्रद्धामय निष्कलुष होता है। वही तप केवल-कैवल्य (मोक्ष) तप कहा जाता है। वह लौकिक-पारलौकिक वासनाओं से शून्य होता है। श्रवण, मनन और निदिध्यासन का पूर्णतः प्रयोग करते हुए किया गया केवल तप सकाम तप की अपेक्षा अधिक समृद्ध-शुद्ध, गुरुतर–होता है। उसी से 'मोक्ष या आत्मसाक्षात्काररूपी फल की प्राप्ति इसी जीवन में होती है।।१२।।

**तपोमूलमिदं सर्वं यन्मां पृच्छसि क्षत्रिय।**
**तपसा वेदविद्वांसः परेत्यामृतमाप्नुयुः।।१३।।**

**चातकप्रिया सं० व्या०**-क्षत्रिय = राजर्षि, मां = सनत्सुजातं, यत् पृच्छसि = प्रश्नासि, तदुत्तरं ब्रवीमि–इदं = एतत् सर्वं सम्पूर्णम्, जगद्वैभवम्, तपोमूलम् = तपःप्रधानम् स तपोऽतप्यदित्यादि तपः- पूर्वकप्रपञ्चसृष्टिः श्रुत्या श्रूयते। वेदविद्वांसश्च = वेदवेत्तारश्च, तपसा= तपोरूपोपासनया ज्ञानेन च, परमम् = श्रेष्ठतमम्, अमृतम् = मोक्षपदम्, आप्नुयुः = प्राप्तवन्तः। त्रिविधतपसा विशुद्धान्तःकरणस्य प्राप्तिरेवा- मृतत्वलाभ इति वेदान्तिनां विचारः।।१३।।

**चातकप्रिया हिन्दी व्याख्या**--सनत्सुजात बोले–हे राजन्! तुम्हारा प्रष्टव्य यह जगत् उस विशुद्ध तप से ही उत्पन्न है। कायिक, वाचिक और मानसिक केवल तप के द्वारा ही वेद–विद्वान् आत्मतत्त्व का शुद्ध अन्तःकरण में साक्षात्कार करते हैं।।१३।।

*धृतराष्ट्र उवाच-*

**कल्मषं तपसो ब्रूहि श्रुतं निष्कल्मषं तपः।**
**सनत्सुजात येनेदं विद्यां गुह्यं सनातनम्।।१४।।**

**अन्वयः**--सनत्सुजात ! निष्कल्मषं तपः श्रुतम्, तपसः कल्मषं ब्रूहि, येन इदं गुह्यं सनातनं विद्याम्।।१४।।

**चातकप्रिया सं० व्या०**--सनत्सुजात महर्षे ! भवतोक्तं निष्कल्मषं विशुद्धं तपः मया श्रुतम्। सम्प्रति त्वं कल्मषं तपसः दोषं वर्णय येन निष्कल्मषेण तपसा इदं गुह्यं रहस्यात्मकं सनातनं शाश्वतं ब्रह्म आत्मानं वाहं विद्यां जानीयामिति।।१४।।

**चातकप्रिया हिन्दी व्याख्या**--धृतराष्ट्र बोले–हे महर्षे सनत्सुजात ! आप द्वारा कथित निष्कल्मष तप की चर्चा मैंने सुनी। अतः अब आप कल्मष का वर्णन करें, जिसको हटा कर मै तपस्या करूँ और उस तपस्या से शुद्ध सनातन रहस्यात्मक ब्रह्म को जान लूँ।।१४।।

*सनत्सुजात उवाच-*

**क्रोधादयो द्वादश तस्य दोषा-**
**स्तथा नृशंसानि च सप्त राजन्।**
**ज्ञानादयो द्वादश चातताना:**
**शास्त्रे गुणा ये विदिता द्विजानाम्।।१५।।**

**अन्वयः**--राजन् ! यस्य क्रोधादयः द्वादश दोषाः सप्त च नृशंसानि द्विजानां च शास्त्रे ये ज्ञानादयः द्वादश गुणाः आतताना: विदिताः (तान् वक्ष्यामीति)।।१५।।

**चातकप्रिया सं० व्या०**--राजन् !, यस्य = तपसः, क्रोधादयः द्वादश, दोषाः = कल्मषाः, तथा नृशंसानि = घातकाः, च, सप्त दोषाः, तथा ज्ञानादयो द्वादश, च, आतताना: = विस्तृताः, शास्त्रे = वेदादौ, ये, विदिताः = उक्ताः, द्विजानां = वेदविदाम्, तान् गुणान् दोषांश्च वर्णयिष्यामीत्याशयः।।१५।।

**चातकप्रिया हिन्दी व्याख्या**--सनत्सुजात ने कहा-राजन् ! तप के क्रोध आदि बारह दोष हैं और सात नृशंस हैं एवम् ज्ञानादि बारह गुण हैं, जिनका वर्णन शास्त्रों में द्विजों के गुण के रूप में हुआ है। इन गुणों और दोषों का वर्णन मैं आगे के श्लोकों में तुम्हें सुनाऊँगा।।१५।।

**क्रोधः कामो लोभमोहौ विवित्साऽ-**
**कृपाऽसूया मानशोकौ स्पृहा च।**
**ईर्ष्या जुगुप्सा च महागुणेन**
**सदा वर्ज्या द्वादशैते नरेण।।१६।।**

**अन्वयः**--स्पष्टः।

**चातकप्रिया सं० व्या०**--क्रमशः क्रोधादीन् दर्शयति-१- क्रोधः =

मानवेच्छाप्रतिघातोत्पद्यमान आक्रोशनताड़नादिहेतुर्मनस्तापः, २- काम= नार्यभिलाषः, ३- लोभः = परधनेच्छा, धनव्ययभीरुत्वं वा, ४- मोह= कृत्याकृत्यविवेकशून्यत्वम्, ५- विवित्सा = रूपरसादिपञ्च विषयाणां रसान्वेत्तुमिच्छा, विषयातृप्तिर्वा, ६- अकृपा = निर्दयता, ७- असूय= परगुणेषु दोषाविष्कारः, ८- मानः = आत्मनि पूज्यताबुद्धिः, ९- इष्टार्थविनाशे सति मनोवैकल्यम् - शोकः, १०- स्पृहा = विषयभोगेष्वादरः, ११- ईर्ष्या = परोत्कर्षासहिष्णुत्वम्, १२- जुगुप्सा= परगुणापह्नोतुमिच्छा, परनिन्दा वीभत्सता वा-ऐते क्रोधादयो द्वादशसंख्याकाः तपसो दोषाः। ऐते कल्मषरूपाः तपोदोषाः महागुणेन= ब्रह्माप्तिगुणेन, ब्राह्मणेन = ब्रह्मतत्त्वविदा, सदा वर्ज्याः = परित्याज्याः। तथा च नाम महोदधौ ग्रन्थे-

महद् ब्रह्म इति प्रोक्तं महत्वान्महतामपि।
तत्प्राप्तिगुणसंयुक्तो महागुण इति स्मृतः।।

एषः स्वाभाविकः ब्राह्मणानामुत्तमगुणान्वयः, यथा-गीतायाम् -

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानविज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्।।१६।।

चातकप्रिया हिन्दी--ब्रह्मतत्त्व के साधक वेत्ता को चाहिए कि वह १-काम, २-क्रोध, ३-लोभ, ४-मोह, ५-विवित्सा, ६-निर्दयता, ७-असूया, ८-अभिमान, ९-शोक, १०-स्पृष्टा, ११-ईर्ष्या और १२-परनिन्दा--इन (बारह) तपोदोषों का परित्याग कर दे।।१६।।

**एकैकमेते राजेन्द्र मनुष्यं पर्युपासते।**
**लिप्समानोऽन्तरं तेषां मृगाणामिव लुब्धकः।।१७।।**

अन्वयः--राजेन्द्र तेषां, मृगाणाम् अन्तरं लिप्समानः लुब्धकः इव एते एकैकं मनुष्यं पर्युपासते।।१७।।

चातकप्रिया सं० व्या०--राजेन्द्र = नृपेन्द्र, तेषां = मनुष्याणाम्, मृगाणां = वन्यपशूनाम्, अन्तरं = अनवधानताम्, लिप्समानः =वाञ्छन्,

लुब्धकः = मृगयुः, इव = यथा, एते = क्रोधादयः तपो दोषाः, एकैकम्= पृथक् पृथक् सन्, मनुष्यं = नरम्, पर्युपासते = परिचरन्ति। यथा आखेटकः एकामपि मृगस्यानवधानतां वीक्ष्य तं निगड़निबद्धं विधाय हन्ति, तथैव क्रोधादिषु प्रत्येको दोषः मनुष्यस्य छिद्रमनवधानतां लब्धा हन्ति किमुत सर्वेषां दोषाणां कथा। अतः तेषु दोषेषु एकोऽपि विनाशहेतुः। सर्वथा ते वर्जनीयाः।।१७।।

**चातकप्रिया हिन्दी**--हे नृपश्रेष्ठ !, जैसे शिकारी मृगों की एक भी असावधानी हाथ आ जाने पर उन्हें जाल में फाँसकर मार डालता है, वैसे ही इन दोषों में से प्रत्येक दोष मनुष्य के अन्दर असावधानी के अवसर की तलाश में रहता है और असावधानी होते ही आक्रमण करके विनाश कर देता है। मनुष्य का स्वाभाविक ब्रह्मभाव से च्युत होना ही असावधानी है। उसी समय क्रोधादि दोष घेर कर मनुष्य का सर्वनाश कर देते हैं। इसलिए निरन्तर सतर्कतापूर्वक दोषों का परित्याग किये रहना चाहिए।।१७।।

**संभोगसंविद्विषमेधमानो**
**दत्तानुतापी कृपणोऽबलीयान्।**
**वर्गप्रशंसी वनिताञ्च द्वेष्टा**
**एते परे सप्त नृशंसरूपाः।।१८।।**

**अन्वयः**--सम्भोगसंविद् विषम् एधमानः दत्तानुतापी कृपणः अबलीयान् वर्गप्रशंसी वनिताम् च द्वेष्टा एते परे सप्त नृशंसरूपाः।।१८।।

**चातकप्रिया सं० व्या**--इदानीं नृशंससप्तकमाह-सम्भोगेति। १- सम्भोगसंवित् = संभोगः स्त्रीप्रसङ्गादिः तस्मिन् संवित् बुद्धिः यस्य सः भोगतन्मयः, २- विषमेधमानः = विषमिव परेषामुपद्रवं कृत्वा वर्द्धमानः दुराचारे रुचिरित्यर्थः, ३- दत्तानुतापी = दानं दत्त्वापि लोभात् मम धनं नष्टमिति मत्वा सन्तापकृत् , ४- कृपणः = महापमानपूर्वकमपि यत्किञ्चिद् द्रव्यलवलाभमात्रलोभवान्, प्राणान्तेऽपि धनव्ययमसहमानः।

५- अबलीयान् = ज्ञानशक्तिरहितः, ६- वर्गप्रशंसी = इन्द्रियप्रशंसी परेषां दुःखेन सुखी वेति, ७- वनितां च द्वेष्टा = स्वविवाहितायां भार्यायामनन्यशरणायां द्वेष्टा, एते = सम्प्रति कथिताः, सप्त दोषाः, परे = पूर्वकथितेभ्यः क्रोधादिभ्यः भिन्नाः, नृशंसरूपाः = नृन् शंसति हन्तीति नृशंसः तद्रूपाः क्रूराः दोषा इति।।१८।।

**चातकप्रिया हिन्दी**--१- स्त्रीप्रसंग आदि विषयों के भोग में लिप्तता, २- दूसरे को परेशान करके समृद्ध होना, ३- दान कर के पश्चात्ताप, ४- कृपणता, ५- ज्ञान--बल का अभाव, ६- इन्द्रिय--वर्ग की प्रशंसा, और ७- अपनी अनन्यशरणा विवाहिता पत्नी से द्वेष - ये सात नृशंसरूप क्रूर दोष, पूर्वोक्त क्रोधादि बारह दोषों से अलग हैं।।१८।।

**ज्ञानं च सत्यं च दमः श्रुतं च,**
**अमात्सर्यं ह्रीस्तितिक्षाऽनसूया।**
**यज्ञश्च दानं च धृतिः शमश्च**
**महाव्रता द्वादश ब्राह्मणस्य।।१९।।**

**चातकप्रिया सं० व्या०**--इदानीं ज्ञानादयो द्वादश गुणा उच्यन्ते-ज्ञानञ्चेति। १- ज्ञानम् = तत्त्वज्ञानम् , २- सत्यं = हिंसारहितं यथार्थ-थाषणम्, ३- दमः = जिह्वोपस्थादिनिग्रहः, ४- श्रुतम् =अर्थज्ञानपूर्वक-मध्यात्मशास्त्रालोचनम्, ५- अमात्सर्यम् = मत्सरः परगुणासहनम् तदभावः, ६- ह्रीः = अकार्यकरणे लज्जा, ७-तितिक्षा = सत्यपि क्रोधादिकारणे तदनुत्पादः, ८- अनसूया = परगुणेषु दोषानाविष्करणम्, ९- यज्ञः = अग्निष्टोमादिः, १०-दानम् = ब्राह्मणादिभ्यो धनादिपरित्यागः, ११- धृतिः = विषयसमीपेऽपि इन्द्रियनिग्रहः, १२-शमः = मनोनिग्रहः, इत्येते द्वादशसंख्याकाः, महाव्रताः = मोक्षसाधनभूताः, ब्राह्मणस्य = ब्रह्म प्राप्तुमिच्छोः, वर्णिताः = उक्ताः।।१९।।

**चातकप्रिया हिन्दी**--ज्ञान, सत्य, दम, श्रुत, अमात्सर्य, लज्जा, तितिक्षा, अनसूया, यज्ञ, दान, धृति और शम-ये ब्रह्म--प्राप्ति के इच्छुक व्यक्ति

के बारह गुणरूपी महाव्रत हैं।।१९।।

यस्त्वेतेभ्योऽप्रवसेत् द्वादशेभ्यः
सर्वामिमां पृथिवीं स प्रशिष्यात्।
त्रिभिर्द्वाभ्यामेकतो वाऽविमुक्ताः
क्रमाद्विमुक्ता मौनभूता भवन्ति।।२०।।

अन्वयः--यः एतेभ्यः द्वादशेभ्यः अप्रवसेत्, स तु इमां सर्वां पृथिवीं प्रशिष्यात्। त्रिभिः द्वाभ्यां वा एकतः अविमुक्ताः क्रमात् विमुक्ताः मौनभूताः भवन्ति।।२०।।

चातकप्रिया सं० व्या०--अधुना गुणान् स्तौति। यः = पुरुषः, एतेभ्यः = ज्ञानादिभ्यः, द्वादशेभ्यः, अप्रवसेत् = प्रवासं मा कुर्यात् अर्थात् तैः समन्वितो भवेत्, सः = सर्वगुणाढ्यः सन्, सर्वामिमां = सर्वामेताम्, पृथिवीं = जगत् शरीरं वा, प्रशास्ति = स्वाधीनीकरोति। ये च एतेषां मध्ये त्रिभिः द्वाभ्याम् , एकस्माद् वा, अविमुक्ताः, अर्थात् ज्ञानादिषु केनापि गुणेन समन्विताः, ते एते पुरुषाः, क्रमात् = क्रमशः शनैः शनैः, विमुक्ताः = विशिष्टज्ञानिनो भूत्वा, मौनभूताः = ब्रह्मज्ञाः, भवन्ति = जायन्ते।।२०।।

चातकप्रिया हिन्दी--अब गुणों की स्तुति करते हुए कहते हैं-जो इन बारह गुणों से समन्वित हो जाता है, वह सम्पूर्ण पृथ्वी को अपने वश में कर लेता है। इसके अलावा जो इनमें से एक-दो को भी अपने में उतार लेता है, वह भी धीरे-धीरे संसार से मुक्त होकर परब्रह्म को प्राप्त कर लेता है। कहने का आशय यह कि ऐन्द्रिय सुख से विमुक्त होकर पुरुष धीरे-धीरे बुद्धि-स्थित चिदात्मा का अनुभव करने लगता है।।२०।।

दमोऽष्टादशदोषः स्यात् प्रातिकूल्यं कृते भवेत्।
अनृतं पैशुनं तृष्णा प्रातिकूल्यं तमोऽशरतिः।।२१।।

लोकद्वेषोऽभिमानश्च, विवादः प्राणिपीडनम्।
परिवादोऽतिवादश्च परितापोऽक्षमाऽधृतिः।।२२।।
असिद्धिः पापकृत्यं च हिंसा चेति प्रकीर्तिताः।
एतैर्दोषैर्विमुक्तो यः स दमः सद्भिरुच्यते।।२३।।

**चातकप्रिया सं० व्या०**-श्लोकत्रयेणेदानीं दमदोषानाह-दमः, अष्टादशदोषः, अष्टादशदोषयुक्तो भवति। एतेषां दोषत्वं किमिति चेत्, प्रातिकूल्यं कृते = विपरीतं कृते, भवेत् । एतेषामन्यतमे कृते--दमस्य विपरीतं कृते भवेत्, के ते दोषाः-१- अनृतम् = मृषावचनम्, २- पैशुनं = परदोषवचनम्, ३- तृष्णा = विषयाशा, ४- प्रातिकूल्यं= सर्वेषां प्रतिकूलता, ५- तम= अज्ञानम्, ६- अरतिः = यथालाभं सन्तोषाभावः, सत्क्रियानभिलाषः, स्त्रीसम्भोगेष्वभिरतिः वा, ७- लोकद्वेष = देशद्रोहः, ८- अभिमानः= सर्वत्र विनम्रताभावः, ९- विवादः = कलहः, १०- प्राणिपीडनम् = स्वार्थसिद्ध्यर्थं प्राणिवधः, ११- परिवादः= समक्षे परदोषकथनम्, १२-अतिवादः =वृथातिप्रलापः, १३-परितापः= निरर्थकमतिदुःखचिन्तनम्, १४-अक्षमा = द्वन्द्वासहिष्णुता, १५-अधृतिः= इन्द्रियाणां विषयेषु लौल्यम्, १६-असिद्धिः = धर्मज्ञानवैराग्येषु सफलताभावः, १७-पापकृत्यं = निषिद्धाचरणम्, १८-हिंसा = वैदिक-विधानेष्वविहितः स्वार्थे जीववधः,-इति-अष्टादश-दमदोषाः, प्रकीर्तिताः = उक्ताः, एतैः = अनृतादिभिः, विमुक्तो यो गुणः सः, सद्भिः = ब्रह्मविद्भिः, दमः = तदाख्यं व्रतम्, उच्यते = कथ्यते। अर्थात् एतेषामनृतादीनामभाव एव "दम" इत्याख्यो गुणः।।२१-२३।।

**चातकप्रिया हिन्दी**--अब "दम" नामक गुण का वर्णन करने के लिए उन दोषों को बतला रहे हैं, जिनका न होना ही "दम" कहा जाता है। ये अठारह दोष इस प्रकार हैं- १- असत्यभाषण, २- चुगली करना, ३-विषयासक्ति, ४- लोकविरुद्ध आचरण, ५-अज्ञान,

६-आलस्य, ७-द्वेष, ८-अभिमान, ९-कलह, १०-प्राणियों को पीड़ा पहुँचाना, ११- परिवाद, १२-वृथा प्रलाप करना, १३-निरर्थक दुःख व्यक्त करना, १४-असहिष्णुता, १५-धैर्य का अभाव, १६-धर्मादि में असफलता, १७-निषिद्ध आचरण और १८-हिंसा। "दम" एक इन्द्रिय-संयम है, आत्म-साक्षात्कार के लिए जिसका होना आवश्यक है।।२१-२३।।

**मदोऽष्टादशदोषः स्यात् त्यागो भवति षड्विधः।**
**विपर्ययाः स्मृता ह्येते मददोषा उदाहृताः।।२४।।**

**चातकप्रिया सं० व्या०**-त्यागः षड्विधः भवति-अग्रिमे श्लोके तद्वर्णनं करिष्यते। एते अनृतादिहिंसापर्यन्ता ये दमस्य दोषाः स्मृताः = उक्ताः, त एव विपर्ययाः = तद्विपरीताः, स्मृताः = कथिताः सन्तः-सत्यादिरूपेण वर्णिताः सन्तः "मदस्य" दोषाः = मदनाशकराः, उदाहृताः = उक्ताः। त एते यथा-सत्यम्, अपैशुनम्, अतृष्णा, अप्रातिकूल्यम्, अतमः, अरतिः, लोकद्वेषाभावः, अनभिमानः, अविवादः, अप्राणिहिंसा, अपरिवादः, अनतिवादः, अपरितापः, क्षमा, धृतिः, सिद्धिः, अपापाचरणम्, अहिंसा-इत्येतेर्मदो नष्टो भवति।।२४।।

**चातकप्रिया हिन्दी**--"दम" का विपर्यय "मद" है। मद के अठारह दोष कहे गये हैं। त्याग छः प्रकार का होता है। "दम" के कहे गये अठारह असत्य आदि ही विपरीत रूप से मद के दोष हो जाते हैं। जैसे-असत्य का सत्य, पैशुन्य का अपैशुन्य, तृष्णा का अतृष्णा इत्यादि। (शेष संस्कृत टीका में देखना चाहिए) "मद" का निरास होने पर ही "दम" की सिद्धि होती है। सत्य आदि का आचरण होने से "दम" बलवान होता है और "मद" विनष्ट।।२४।।

**श्रेयांस्तु षड्विधस्त्यागस्तृतीयः खलु दुष्करः।**
**तेन दुःखं तरत्येव तस्मिंस्त्यक्ते जितं भवेत्।।२५।।**

**चातकप्रिया सं० व्या०**--त्यागो वर्ण्यते। षट्प्रकारकः षड्विधः, त्यागः,

तु, श्रेयान् = कल्याणकरः। तथापि तेषु षट्त्यागेषु, तृतीयः = वक्ष्यमाणः कामत्यागः, दुष्करः = दुःखेन त्यक्तुं योग्यः। केचिदेव कामत्यागे सफलाः, नहि यश्चित् कश्चित्। मोहादिरूपाखिलप्रपञ्चस्य काममूलत्वात् कामस्य च वासनारूपत्वात् कामत्यागो नास्ति सामान्यः। परन्तु तेन = कामत्यागेन पुरुषः, दुःखम् = आध्यात्मिकमाधिदैविकमाधिभौतिकञ्चेति त्रिविधमेव दुःखं निश्चितं तरति। एवं तस्मिन् = त्यागे सम्पन्ने सति, सर्वं = द्वैतोत्पन्नं जगत्, जितं = विजितं भवेत् । काम एव द्वैतबुद्धिकरः। कामत्यागादेव सकलदुःखनिवृत्त्यात्मको मोक्षः सिद्धो भवति। तथा च श्रुतिः-

"यदा सर्वे प्रमुच्यन्ते कामा ये च हृदि स्थितः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते।।२५।।

चातकप्रिया हिन्दी--त्याग ६ प्रकार के हैं और सभी श्रेयस्कर हैं। फिर भी तीसरा कामत्याग अति कठिन है। उसको त्यागने से मनुष्य भवसागर पार हो जाता है। उस त्याग की सम्पन्नता ही वास्तविक विजय है। कामत्याग ही दुःखों की आत्यन्तिक निवृत्ति करा कर मोक्ष की सिद्धि करता है।।२५।।

अर्हते याचमानाय पुत्रान् वित्तं ददाति यत्।
इष्टापूर्तं द्वितीयं स्यान्नित्यं वैराग्ययोगतः।।२६।।
कामत्यागश्च राजेन्द्र स तृतीय इति स्मृतः।
अप्रमादी भवेदेतैः स चाप्यत्र गुणो महान्।।२७।।

चातकप्रिया सं० व्या०--त्यागषट्कं दर्शयति-अर्हत इति। अर्हते = दानपात्राय याचकाय, पुत्रान्वितं = पुत्रसहितम्, यत् = वस्तु, ददाति= समर्पयति, तत् प्रथमम्। इष्टापूर्तं = इष्टं श्रौते कर्मणि यद्दानं पूर्तं स्मार्ते कर्मणि च यद्दानं अथवा इष्टं देवेभ्यः पूर्तं च पितृभ्यो यद्दत्तं दानम् -तद् द्वितीयम्। नित्यं = निरन्तरम्, वैराग्ययोगतः = विरक्ततया, धनादित्यागः कामत्यागश्च, राजेन्द्र = राजन्, तृतीयः त्यागः। फलं

वदति त्यागस्य-एतैः = षड्भिः, त्यागैः समन्वितः, सः = पुरुषः, अप्रमादी= ज्ञाननिष्ठो भवेत्। स च = अप्रमादोऽपि, अष्टगुणः = अष्टभिर्गुणैः समन्वितो भवतीति।।२६-२७।।

चातकप्रिया हिन्दी--षड्विध त्याग के स्वरूप का वर्णन करते हैं-किसी सत्पात्र के आने पर जो पुत्रसहित धन का त्याग किया जाता है, वह प्रथम त्याग है। यज्ञार्थ हवन–सामग्री तथा लोकहित के लिए तालाब, कुँआ आदि का निर्माण कराना-दूसरा त्याग है। भोग्य पदार्थों के प्रति आसक्ति और कामना का परित्याग-तीसरा त्याग है। इन त्रिविध त्यागों में अपना हित और संसार का हित-दोनों निहित है। इन-त्याग गुणों को अपनाने वाला अप्रमादी हो जाता है।

**सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च।**
**अस्तेयं ब्रह्मचर्यं च तथा संग्रहमेव च।।२८।।**

चातकप्रिया सं० व्या०--अप्रमादस्य अष्टौ गुणाः प्राङ् निर्दिष्टा, के च ते-तान् दर्शयति-१- सत्यम् = यथार्थभाषणम्, २- ध्यानम् = चेतसि, हृदये, कस्मिँश्चित् शुभाधारे, गुरौ वा परमात्मनः तैलधारावच्चित्तवृत्या सततमनुसंधानम्, ३- समाधानम् = सर्वं कच्छपवदन्तःसंहृत्य सम्प्रज्ञातासम्प्रज्ञातभेदेन द्विविधे समाधौ स्वात्मनावस्थानम्, ४- चोद्यम्= कोऽहं, कुत आयातः, कस्याहमित्यादिरूपः तर्कः ये समाधिफले सर्व-काम्यादौ दोषमुन्नयन्ति, ५ वैराग्यम् = दृष्टानुश्रविकविषयवितृष्णाता, ६- अस्तेयम् = परद्रव्यस्य आत्मनो वा अचौर्यम्, आत्मचौर्यमित्थमुक्तम्-

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चौरेणात्मापहारिणा।।इति

७- ब्रह्मचर्यम् = स्त्रीसङ्गस्य सर्वविधराहित्यम्, यथोक्तम्–

दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम्।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च।।

एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्।।इति।।

८-असङ्गहः = पुत्रदारगृहादीनामपरिग्रहः।।२८।।

चातकप्रिया हिन्दी--१- सत्य भाषण, २- ईश्वर का ध्यान, ३- आध्यात्मिक चिन्तन, ४- ज्ञान की जिज्ञासा, ५- वैराग्य, ६- चोरी न करना, ७- सर्वविध ब्रह्मचर्य का पालन, ८- धन आदि का संग्रह न करना-इन आठ गुणों का पालन करे।।२८।।

एवं दोषा दमस्योक्तास्तान् दोषान् परिवर्जयेत्।
दोषत्यागोऽप्रमादः स्यात् स चाप्यष्टगुणो मतः।।२९।।

चातकप्रिया सं० व्या०--दोषान् परिवर्जयेदिति कथयति-एवमनेन प्रकारेण दमस्य पूर्वं कथिताः अष्टादशसंख्या का दोषाः त्यक्तव्याः। कस्मात्? उच्यते-दोषत्यागेऽप्रमादः स्यात्, तेषु दोषेषु परिवर्जितेषु प्रमादी न भवेत्। सोऽप्यप्रमादोऽष्टगुणोपेतः-सत्यम्, ध्यानमित्यादि प्रागेवोपदिष्टम्।।२९।।

चातकप्रिया हिन्दी--इसमें जो आठ गुण कहे गये हैं, वे त्याग और अप्रमाद दोनों के हैं। पहले बतलाये गये दम के १८ दोषों का सर्वथा परित्याग कर देना चाहिए। उनके त्याग से पुरुष अप्रमादी हो जाता है। प्रमाद के भी आठ गुण होते हैं।।२९।।

इदानीं सत्यं स्तौति-

सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः।
तांस्तु सत्यमुखानाहुः सत्ये ह्यमृतमाहितम्।।३०।।

चातकप्रिया सं०व्या०-राजेन्द्र = नृपश्रेष्ठ, सत्यात्मा = सत्यस्वरूपो, भव, लोकाः = भूरादयः, सत्ये प्रतिष्ठिताः = स्थिताः सन्ति। तांस्तु सत्यमुखान् = सत्यप्रधानान्, आहुः = कथयन्ति ऋषयः। हि = निश्चयेन, सत्ये, अमृतम् = मोक्षः, आहितम् = प्रतिष्ठितम्।।३०।।

चातकप्रिया हिन्दी--हे राजन्! तुम सत्यस्वरूप हो जाओ, क्योंकि सत्य में ही सम्पूर्ण भू आदि लोक स्थित हैं। वे लोक सत्यरूपी दरवाजे वाले कहे जाते हैं। सत्य में ही मोक्ष प्रतिष्ठित है। कहने का आशय यह है कि त्रिकालाबाधित आत्मानन्दस्वरूप ब्रह्म ही एकमात्र सत्य है। तदतिरिक्त समग्र ब्रह्माण्डीय प्रपञ्च मिथ्या है। जैसा कि श्रुति ने स्वयं कहा है-"सर्वं खल्विदं ब्रह्म" "ब्रह्म सत्यं जगन्मिथ्या"।।३०।।

**निवृत्तेनैव दोषेण तपोव्रतमिहाचरेत्।**
**एतद्धात्रा कृतं वृत्तं सत्यमेव सतां व्रतम्।।३१।।**

चातकप्रिया सं० व्या०-निवृत्तेनैव दोषेण = क्रोधादय इत्यादिना प्राक्कथितेन दोषसमूहेन रहितेन प्रागुक्तद्दोषशून्यं, तपोव्रतम् = तपः, व्रतञ्च, इह = अत्र लोके, आचरेत् = साधयेत्, धात्रा = ब्रह्मणा, सत्यमेव, सताम् = सत्पुरुषाणाम्, एतत् = सत्यम्, एव, वृत्तं = व्रतम्, कृतम् = निर्धारितम्।

चातकप्रिया हिन्दी--पूर्वकथित क्रोध, काम आदि दोषों से रहित होकर ही इस संसार में तप और व्रत की साधना करनी चाहिए, क्योंकि ब्रह्मा ने सत्पुरुषों के लिए सत्यव्रत का ही नियमित विधान किया है। ब्रह्मा के द्वारा निर्धारित नियम का पालन करना ही सृष्टि के जीवों का कल्याणकर परम कर्त्तव्य है।।३१।।

**दोषैरेतैर्विमुक्तं तु गुणैरेतैः समन्वितम्।**
**एतत् समृद्धमप्यृद्धं तपो भवति केवलम्।।३२।।**

चातकप्रिया सं० व्या०-इदानीं "कथं" समृद्धमित्यादिनोपक्रान्तं प्रकरणमुपसंहरति-एतैः = क्रोधादिभिः, दोषैः, विमुक्तं = रहितम्, एतैः= ज्ञानादिभिश्च, गुणैः, समन्वितम् = युक्तम्, एतत् = इदम्, समृद्धम्=श्रेष्ठम्, अपि, ऋद्धम्=तपः, केवलम् =कैवल्यप्रदम्, भवति।।३२।।

चातकप्रिया हिन्दी-मनुष्य को चाहिए कि वह इन दोषों से मुक्त तथा ज्ञानादि गुणों से समन्वित होकर ही तप करे। दोषनिर्मुक्त और गुणयुक्त तप ही अत्यन्त शुद्ध, समृद्ध मोक्षप्रदं होता है।।३२।।

**यन्मां पृच्छसि राजेन्द्र संक्षेपात्प्रब्रवीमि ते।**
**एतत् पापहरं शुद्धं जन्ममृत्युजरापहम्।।३३।।**

चातकप्रिया सं० व्या०-राजेन्द्र = नृपेन्द्र !, मां = सनत्सुजातम् यत् पृच्छसि, तत् सर्वं संक्षेपात् = समासतः, ब्रवीमि = कथयामि ते = त्वाम्, एतत् = इदम्, फलाकांक्षातिरिक्तं शुद्धं तपोव्रतं, जन्ममृत्युजरापहम् = जन्म च मृत्युश्च जरा च तन्नाशकम् इति।।३३।।

चातकप्रिया हिन्दी--हे नृपश्रेष्ठ! आपने मुझसे जो पूछा है, उसे मैं संक्षेप में बता रहा हूँ। यह फलाकांक्षा से शून्य तप और व्रत जन्म-मृत्यु तथा वृद्धावस्था का नाशक, पापहारी और परम पवित्र है।।३३।।

**इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत।**
**अतीतानागतेभ्यश्च मुक्तश्चेत्स सुखी भवेत्।।३४।।**

चातकप्रिया सं० व्या०--भारत = राजन्, यः = पुरुषः, पञ्चभ्यः= पञ्चविषययुक्तेभ्यः, इन्द्रियेभ्यः = करणेभ्यः, मनसश्च, अतीतानागतेभ्यः= भूतभविष्यत्संस्कारेभ्यः, च, मुक्तः = स्वतन्त्रः, चेत् = यदि, सः= पुरुषः, सुखी भवेत्।।३४।।

चातकप्रिया हिन्दी--निष्काम तप का स्वरूप बतलाते हैं-हे राजन्! जो मनुष्य पाँच विषयों, पाँच इन्द्रियों, मन तथा भूत-भविष्य के संस्कारों को छोड़ देता है-कहने का अभिप्राय यह है कि चिन्ता और आशा का त्याग कर देता है,वह पुरुष आनन्दमय हो जाता है।।३४।।

*धृतराष्ट्र उवाच*

**आख्यानपंचमैर्वेदैर्भूयिष्ठं कथ्यते जनः।**
**तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथाऽपरे।।३५।।**

**चातकप्रिया सं० व्या०**--अधीतवेदादीनामनधीतानां च मध्ये कः सर्वश्रेष्ठो ब्राह्मण इति विजिज्ञासमानो धृतराष्ट्रः पृच्छति-आख्यानमिति। आख्यानपंचमैः = आख्यानम् इतिहासपुराणादि पंचमं येषु तैर्वेदैः-**"सर्वं खल्विदं ब्रह्म", "ब्रह्मैवेदं विश्वं", "पुरुष एवेदं सर्वम्"** इत्यादिभिः, भूयिष्ठं नामादिप्रपञ्चादधिकतमं भूमाख्यं परं ब्रह्म तदेव जनः स्थावरजंगमात्मकं जगत्" इति कथ्यते = उच्यते। तथा च, अन्ये = इतरे शाखिनः, चतुर्वेदाः = चतुर्वेदः चत्वारि वेदयन्ति ते तथा चत्वारः पुरुषाः-यथा-बाह्यः शरीरपुरुषः, छन्दःपुरुषः, वेदपुरुषः, महापुरुषः इति चत्वारः। छन्दो गायत्र्यादिनियताक्षरं चरणम् = तच्च, यजुः-साम्नोरप्युपलक्षणम् , वेदः कर्मचोदनात्मकं ब्राह्मणम् । तथाऽपरे = अन्ये, त्रिवेदाः = क्षरम् अक्षरम् उत्तमं चेति पुरुष वेदयन्ते ते त्रिवेदाः **"अमृताक्षरहरः क्षरात्मानावीशते देव एकः"**, अमृतो जीवः कूटस्थः सोऽक्षरं सुलोपः आर्षः ईशते ईष्टे। यथा गीतायाम् -

> **क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।**
> **उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।।**

**अन्योऽर्थः**--आख्यायते व्याख्यायते उपबृंह्यते दृष्टान्तादिदानेन विस्तार्यते वेदार्थो येन तदाख्यानं पुराणम्, वंशाद्यनुवर्णनपरो ग्रन्थविशेषः। तदेव पञ्चमं येषां वेदानां तैराख्यानपंचमैः वेदैः। पुराणानामपि वेदत्वं सुप्रसिद्धम्। यथा छान्दोग्ये इतिहासपुराणं पञ्चममिति। तैरधिगतैः कश्चिज् जनो विप्रः कथ्यते। अन्ये च चतुर्वेदाः चत्वारो ऋगादिवेदा येषां ते। अपरे त्रयो वेदा ऋग्यजुःसामाख्यास्ते त्रिवेदाः सन्ति।।३५।।

**चातकप्रिया हिन्दी**-धृतराष्ट्र ने कहा कि ब्रह्मन् ! इस संसार में कोई व्यक्ति चारों वेदों और पुराणों (पंचमवेद) के ज्ञान से युक्त होकर ही श्रेष्ठ कहा जाता है,कोई केवल चार वेदों को जान कर चतुर्वेदी और कोई तीन वेदों को पढ़ कर त्रिवेदी कहा जाता है।।३६।।

द्विवेदाश्चैकवेदाश्च अनृचश्च तथापरे।
एतेषु मेऽधिकं ब्रूहि यमहं वेद ब्राह्मणम्।।३६।।

**चातकप्रिया सं० व्या०**--तथा "द्विवेदाः = द्वे ब्रह्मणी वेदितव्ये शब्द-ब्रह्म परं च यत्।" इति वाच्यवाचकयोरभेदेन शब्दब्रह्मशब्देनात्र कृत्स्नो नामरूपात्मकः प्रपञ्च उच्यते, परं च तदतीतम् इति द्वयमपि वेद्यत्वेन वदन्ति। एकवेदाः-**"एकधैवानुद्रष्टव्यं नेह नानास्ति किञ्चन"** इत्यादयः एकमेव वेद्यं वेदयन्ति। अनृचश्च = ऋच्यते स्तूयते इति ऋक् ईश्वरः सः पृथक्त्वेन नास्ति येषां तेऽनृचः ब्रह्माद्वैतवादिनः। एकवेदानां व्युत्थानकाले द्वैतमस्ति समाधौ तु तद्बाधितं भवति अनृचां तु अवस्था द्वयेऽपि द्वैताभावस्तुल्य इति भेदः। एतेषां षण्णां मध्ये अधिकं ब्रूहि यमहं वेद = जानीयाम् ब्राह्मणं ब्रह्मविदमित्यर्थः। अत्र "भूयिष्ठं जनः" इति प्रथमः सविशेषाद्वैतपक्षः। द्वितीयो निरीश्वरपक्षः, सांख्यानां मीमांसकानां च। त्रिवेदास्तु पातञ्जला जीवेश्वरजगतां भेदं वदन्तः। द्विवेदास्तु औडुलोमाः कार्यात्मना भेदं कारणात्मना चाभेदं सत्यमेव वदन्तः। तथा कटकमुकुटाद्यात्मना भेदोऽपि सत्यः कनकात्मनाऽभेदोऽपि सत्य एवेति। एकवेदानामपि किञ्चिद्बाधयोग्यं सत्वासत्वाभ्यामनिर्वचनीयं द्वैतमस्त्वेव, व्यावहारिकं प्रातिभासिकात् सद्योबाध्यात् रज्जूरगादेर्विलक्षणं यावन्मोक्षमबाध्यम्। अनृचां तु दृष्टिसृष्टिवादिनां-यथा रज्ज्वामुरगः स्रक् च कल्पिताः एवमात्मनि जाग्रत् स्वप्नौ समसत्ताकौ इति भेदः। तत्र अध्यारोपापवादाभ्यां "निष्प्रपञ्चं प्रपञ्च्यते" इति न्यायेन आद्ये पक्षचतुष्टयं व्यवहारस्य पारमार्थिकत्वपरम् अध्यारोपदृष्ट्योपन्यस्तम्। अन्यः पक्षोपवाददृष्ट्या व्यवहारापलापेन एकवेदपक्षस्तु व्यामृश्रदृष्ट्याऽनिर्वचनीयाख्यया, एवमेव दृष्टित्रयमाश्रित्य शास्त्रमपि प्रवृत्तम्--"आत्मकृतेः परिणामात्" इति अध्यारोपकाले परिणामदृष्टिः सूचिता, ब्रह्मैव कनककुण्डलन्यायेन जगदाकारेण परिणमतम्। तथा च श्रुतिः-"तदात्मानं स्वयमकुरुत सत्यं

चानृतं च सत्यमभवत्"। सत्यं व्यावहारिकं जगद् रज्ज्वादि अनृतं प्रातिभासिकस्वप्नरज्जूरगादि एतदुभयात्मकं सत्यं कालत्रयाबाध्यं ब्रह्मैव प्राप्तमित्यर्थः श्रुतीनाम्। तथा "आत्मानं चैवं विचित्राश्च हि" इति स्वप्नकाले आत्मनि जाग्रत्काले मायेन्द्रजालमरीचिकोदकादयो हि प्रसिद्धतराः सृष्ट्यो भवन्ति विचित्राश्च ताः। न च ताः न सन्तीति वक्तुं शक्यम्, अनुभूयमानत्वात्। नापि सन्तीति, ज्ञानेन सद्यो बाधात्। एवं ब्रह्मण्यपि विचित्रानिर्वचनीया सृष्टिरस्तीति सूत्रार्थः। तथाऽस्य जगतोऽनिर्वचनीयत्वं श्रुतिराह-"को अद्धा वेद क इह प्रावोचत् कुत आजाता कुत इयं विसृष्टिः" इति तं कोऽपि न वेद न कोऽपि प्रावोचत् इत्यर्थः। सेयं व्यामिश्रदृष्टिः। अपवाददृष्टिस्तु "आह च तन्मात्रम्" इति (ब्र०सू०अ०३पा०२सू०१६) सूचिता। स यथा सैंधवखिल्य उदके प्रास्त उदकमेवानुविलीयेत स यथा सैंधवघनोऽनंतरोऽबाह्यः कृत्स्नो रसघन एवम् वा अरेऽयमात्मा कृत्स्नः प्रज्ञानघनः" इति श्रुत्या च दर्शिता। यथा जले प्रास्तः सैंधवखिल्यः स्वोपादानं उदके जले लीनमनु स्वयमपि लीयते अन्यथा करकालय इव जले परिमाणाधिक्यं स्यात् अतः स अन्तरं कारणं बाह्यं घनीभावः तदुभयवर्जितः केवलरसमात्रात्मना जलेऽभिव्यक्तो दृश्यते एवमयं प्रपञ्चः कार्यकारणोभयस्वरूपहीनः समाधौ केवलप्रज्ञानघनोऽभिव्यज्यते इति वेदार्थः। अनेन दृष्टित्रयेण जनबोधार्थं शास्त्रं प्रवृत्तं यथोक्तं संक्षेपशारीरके—

आरोपदृष्टिरपवादकदृष्टिरेवं
व्यामिश्रदृष्टिरिति दृष्टिविभागमेनम्।
संगृह्य सूत्रकृदयं पुरुषं मुमुक्षुं
सम्यक् प्रबोधयितुमुत्सहते क्रमेण।।

इत्यादिना, अपि च—

श्रुतिवचांसि मुनिस्मरणानि च
द्वयविशारदगीरपि सर्वशः।

**त्रयमपेक्ष्य दृशां त्रितयं बिना**
**नहि घटामुपयान्ति कदाचन।।इत्यन्तेन।।३६।।**

**चातकप्रिया हिन्दी**--दूसरे कुछ ब्राह्मण दो वेदों का अध्ययन करके द्विवेद कहे जाते हैं तथा कुछ एक ही वेद में निष्ठा रखते हैं। इनके अतिरिक्त कुछ ऐसे लोग भीं हैं, जो न तो वेदों का अध्ययन करते हैं और न ही उसके महत्त्व को जानते हैं-उन्हें अनृच कहा जाता है। इन सभी प्रकार के साधकों में कौन सर्वोत्तम है और किसका मार्ग सर्वाधिक प्रशस्त है, आप कृपा पूर्वक कहें, ताकि मैं ब्राह्मण का यथार्थ स्वरूप समझ सकूँ।।३६।।

*सनत्सुजात उवाच-*

**एकवेदस्य चाज्ञानात् वेदास्ते बहवोऽभवन्।**
**सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः।।३७।।**

**चातकप्रिया सं० व्या०**--एवमुपस्थापितेष्वनेकेषु पक्षेषु सिद्धान्तं वदति-एकवेदस्येति। राजेन्द्र = नृपवर्य! एकवेदस्य = एकस्य अद्वितीयस्य संविद्रूपस्य परमात्मनः, अज्ञानात् = अनवगमात्, ते वेदाः = ऋगादयः चत्वारः, बहवः = बहूनि अब्रह्मभूतानि उपास्यानि,अभवन् = कल्पितानि। तस्मिन् बहूपास्यवादे परब्रह्मणो विषये सत्यज्ञानाभाव एव हेतुरिति। अयमाशयः-सद्भावं साधयन्तीति वेदाः, विदन्ति, वेदनहेतुभूता इति वा वेदाः। अथवा ब्रह्माधीनमात्मानं लभन्त इति वा वेदाः। ब्रह्मण आत्मतया लाभहेतव इति वा वेदाः। विद्शब्दार्था अनेके, यथा-विद् ज्ञाने अदादौ पठ्यते। वेत्ति जानाति अनेनेति वेदरूपपरब्रह्मज्ञान-साधकत्वात् वेदः। विद् सत्तायाम् इति दिवादौ पठ्यते। विद्यते अस्ति ब्रह्मेति ब्रह्मसद्भावसाधकतया वेदः। विद्लृ लाभे इति तुदादौ पठ्यते। विदन्ति लभते ब्रह्मानेनेति ब्रह्मात्मत्वलाभसाधकत्वात् वेदः। विद् विचारणे इति रुधादौ पठ्यते। वित्ते विचारयति ब्रह्मानेनेति वेदः। विद् चेतनाख्यान-

निवासेषु इति चुरादौ पठ्यते। वेदयते चेतयते बोधयति आख्याति निवासयति प्रतिष्ठापयति इति वा वेदः। उक्तञ्चापि-

"सत्तायां विद्यते ज्ञाने वेत्ति वित्ते विचारणे।
विन्दते विन्दति प्राप्तो श्यन्लुक्श्नम्शेष्विदं क्रमात्।।"

विद्यते यः स वेदः आत्मा। स च वेदान्तमतेन ब्रह्मैवेति। सत् चैकम् इति। एवञ्च एकस्यैव ब्रह्मणः साक्षात् शब्दाख्यानत्वाभावात् नानाविधसाधनप्रदर्शकत्वात् वेदा अपि बहवो जाता इति तात्पर्यम्। साधनस्य चाज्ञानमूलकत्वं वर्तत एव साक्षात्कृते वेदे साधनस्यापि बाध्यत्वात् तस्मादुचितमेवोदितम् "एकवेदस्य चाज्ञानादि"ति।

एकवेदस्वरूपं तत् किमिति जिज्ञासायाम् उच्यते-"सत्यं ज्ञानमनन्तं ब्रह्म", "एकमेवाद्वितीयम्" इति श्रुतिः। एवं तस्य ब्रह्मणः एकत्वं बोधितं भवति। तस्मिन् सत्ये = सत्यस्वरूपे एकवेदरूपे ब्रह्मणि, कश्चिदेव = नहि सर्वे बहवो वापितु विरल एव धीरः, अवस्थितः = नितान्तनिष्ठः। प्रत्यगात्मानं कश्चिदेव धीरः ऐक्षदिति श्रुतेः। स्मृतेश्चापीत्थम् -

मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये।
यततामपि सिद्धानां कश्चिन् मां वेत्ति तत्त्वतः।।३७।।

चातकप्रिया हिन्दी--सनत्सुजात ने कहा-"हे नृपश्रेष्ठ!, सत्यस्वरूप एक ब्रह्म को यथार्थतः न जानने के कारण ही साधनभूत वेद अनेक संख्या में हो गये हैं-सभी ने अपने--अपने ढंग से जानने की चेष्टा की है। उस सत्यस्वरूप एकवेदरूप परब्रह्म में कोई--कोई धीर पुरुष ही अवस्थित हो पाता है।।३७।।

**य एनं वेद तत् सत्यं प्राज्ञो भवति नित्यदा।**
**दानमध्ययनं यज्ञो लोभादेव प्रवर्तते।।३८।।**

चातकप्रिया सं० व्या०-इदानीं सत्यस्वरूपस्य ब्रह्मणो वेदनफलमाह-य एनमिति। यः = कश्चित्, तत् सत्यं = अद्वितीयम्, वेदरूपम्, एनं

ब्रह्म वेद = आत्मत्वेन साक्षात्करोति, सः = साक्षात् कृदात्मदर्शी, नित्यदा = सर्वकालम्, प्राज्ञः = प्रकर्षेण आसमन्तात् ज्ञः ज्ञानी ज्ञानरूपो भवति। अथवा नित्यं ददातीति नित्यदा सर्वदा ब्रह्म ददाति जानाति यः सः। ब्रह्मविद् ब्रह्मैव भवतीति श्रुतिः। प्राज्ञशब्देन बोधरूपतैव विवक्षितात्र। अन्येषां तत्प्राप्त्यर्थं निर्दिष्टसाधनानां फलमाह-दानम्= विप्राद्युद्देश्यकविधिपूर्वकवित्तादित्यागः, अध्ययनम् = अध्यात्मशास्त्राणां स्वाध्यायः, पारायणं वा, यज्ञः = अश्वमेधादिः--एतत् सर्वं साधनाचरणम्, लोभादेव प्रवर्तते। लोभः = कामः, दानादिश्च काममूलकः। "स्वाध्यायोऽध्येतव्यः" यद्यप्यस्त्ययं नित्यविधिः। अत्र च काम्यकर्मत्वं नास्ति। एतत् सम्पादने नास्ति कोऽपि लाभः कामो वा। तथापि तत्राध्यापनादिना वृत्तिप्राप्तिरूपकामस्य स्थितिरस्त्येव। अकरणे च नित्यविधेर्मा स्प्राक्षीरित्यप्यस्ति कामः। तस्मादेव भवति नित्यप्रवृत्तिः। अपरश्चायमर्थः-लोभयतीति लोभः मोहोऽज्ञानम्। सर्वाणि जगत्कर्माणि सन्त्यज्ञानमूलानि।।३८।।

चातकप्रिया हिन्दी--जो इस सत्य का ज्ञान प्राप्त कर लेता है, वह सदा प्राज्ञ (ज्ञानी) हो जाता है। फिर उसे कुछ करना शेष नहीं रहता। ईश्वर-प्राप्ति के लिए कहे गये दान, अध्ययन और यज्ञ आदि साधन तो किसी न किसी इच्छा को लेकर ही अपनाये जाते हैं।।३८।।

**सत्यात् प्रच्यवमानानां संकल्पा वितथाऽभवन्।**
**ततः कर्म प्रतायेत् सत्यस्यानवधारणात्।।३९।।**

चातकप्रिया सं० व्या०--इदानीं सत्यात् प्रच्युतस्य कर्मकारित्वमाह-सत्यादित्यादिना। सत्यात् = सच्चिदानन्दस्वरूपात् ब्रह्मणः, प्रच्यवमानानाम्= पृथग्भूतानां शरीरादौ सक्तानामज्ञानिनाम्, संकल्पाः= मनोरथा निश्चया वा, वितथाः = वृथा फलशून्याः, अभवन् = भवन्ति।

तेषां सहजसंकल्पा न भवन्ति पूर्णाः। तस्मादेव तेषां हृदि क्षणिकविषयानन्दविषयकोऽभिलाषो जायते। ततः = तदनन्तरम्, तद्धेतोः, कर्म = ज्योतिष्टोमादिर्यज्ञः, प्रतायेत् = विस्तृतं भवेत्। तदेतत् सर्वं सत्यस्य = वेदेषु सारतया ज्योतिष्टोमादिसम्पादनमाध्यमेन प्रतिपादितस्य सत्यादिस्वरूपस्य ब्रह्मणः, अनवधारणात् = अनिश्चयादनवगमात्। अभिप्रायोऽयम् -जीवोऽयं यावदज्ञानकारणात् परमात्मानं यावत् संसारस्य परमात्मत्वेन साक्षात्कारं न कुरुते तावत् मायया मोमुह्यमानोऽसत्संकल्पवान् स्वर्गसुखदेहसुखस्त्र्यादिसुखोपलब्धिसाधनेषु कर्मसु प्रवृत्तो भवति। आत्मानञ्च ज्ञात्वा कृतार्थतामाप्नोति। यथा गीतायाम् -

एतद् बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत!।।इति।।३९।।

चातकप्रिया हिन्दी--अब सच्चिदानन्दात्मक सत्यरूपी ब्रह्म से हट कर शरीरादि में ही आसक्त रहने वालों के कर्म की चर्चा करते हैं-जो लोग सत्यस्वरूप परब्रह्म से दूर हैं अर्थात् नित्य उसमें स्थित नहीं हैं, उनके सभी संकल्प व्यर्थ होते हैं। उसी की वजह से स्वर्गादि भोगों के प्रति उनकी कामना जागती है और फिर उसी कामना (लोभ) से उस कामना--पूर्ति के साधन के रूप में निर्दिष्ट यज्ञों (कर्मों) में प्रवृत्त होते रहते हैं। कहने का आशय यह कि कर्म का प्रतिपादन केवल अज्ञानी के लिए ही है।।३९।।

*ब्राह्मणलक्षणमाह-*

विद्याद् बहुपठन्तं तु बहुवागिति ब्राह्मणम्।
य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया।।४०।।

चातकप्रिया सं० व्या०--बहुपठन्तम् = पुराणादिपञ्चमवेदाध्येतारम्, ब्राह्मणम् = ब्राह्मणकुले लब्धजन्मानम्, तु-(अरुच्यर्थे) बहुवाग् = बहुभाषणशीलः, इति विद्यात् = जानीयात्। केवलशास्त्रवेत्ता प्रवचनकर्त्ता ब्राह्मणस्त्वस्ति परं द्वितीयकोटिकः। कस्तर्हि मुख्यो ब्राह्मणः? उत्तरं

ददाति-यः एव = महापुरुषः, सत्यात् = सत्यस्वरूपादात्मनः, नापैति = न क्षरति, अर्थात् सततमेव चित्सदानन्दाद्वितीयब्रह्मरूपेणावतिष्ठते, स एव = आत्मस्थः, त्वया = भवता, ब्राह्मणः = ब्राह्मणशब्दस्य वास्तविकोऽर्थभाक्, ज्ञेयः = स्वीकार्यः, नेतरः कश्चित् सत्यच्युतः कर्मासक्तः। तथा च श्रुतिः-"मौनं चामौनं च निर्विद्याथ ब्राह्मणः" इति। "विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति" इति। "यो वा एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः"। इति च।।४०।।

चातकप्रिया हिन्दी--जो केवल शास्त्रों का ज्ञाता है वह ब्राह्मण जाति का होकर भी बहुभाषी--मात्र है। वह द्वितीयकोटिक ब्राह्मण है। उत्तम ब्राह्मण वह है, जो ब्राह्मी स्थिति से कभी च्युत नहीं होता।।४०।।

छन्दांसि नाम द्विपदां वरिष्ठ
स्वच्छन्दयोगेन भवन्ति तत्र।
छन्दोविदस्तेन च तानधीत्य
गता हि वेदस्य न वेद्यमार्याः।।४१।।

अन्वयः--द्विपदां वरिष्ठ छन्दांसि नाम स्वच्छन्दयोगेन तत्र भवन्ति। तेन छन्दोविदः आर्याः तान् अधीत्य हि वेदस्य वेद्यं गताः न।।४१।।

चातकप्रिया सं०व्या०--वेदस्य सार्थकत्वं ब्रवीति--छंदांसीत्यादिना। द्विपदां वरिष्ठ = नरोत्तम!, छन्दांसि = वेदाः, सत्यब्रह्मविषये, स्वच्छन्दयोगेन= यथेच्छं यथाकामं, भवन्ति = प्रमाणयन्ति। अयमाशयः-वेदाः कर्मकाण्डस्यार्थज्ञानमिव ब्रह्मकाण्डार्थज्ञानमध्येऽनुष्ठानान्तरं वाञ्छन्ति। तथाहि-"तद्धेतंत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवम् सूर्यश्च" इति श्रुत्या दर्शनसार्वात्मयोर्मध्ये तिष्ठन् गायतीत्यादौ तिष्ठतिगायत्योर्मध्ये इव कार्यान्तरं वार्यते। श्रूयते च स्मृतौ-"सर्वे वेदा यत्पदमामनन्ति", "वेदैश्च सर्वैरहमेव वेद्यः" इति च। तेन = ज्ञातेन सत्येन, च = एव, छन्दोविदः=

वेदज्ञाः, भवन्ति न केवलेन कर्मज्ञानेन, आर्याः = श्रेष्ठजनाः वेदवेत्तारः, तान् = वेदान्, अधीत्य = अवगम्य, वेदस्य = छन्दसः, वेद्यं = प्रतिपाद्यं संविद्रूपं ब्रह्म, गताः = प्राप्ताः, न = तद्भिन्नं जगत्प्रपञ्चं न प्राप्ता इति। तथा च श्रुतिः-"तद्विशानार्थं स गुरुमेवाभिगच्छेत्" इति।।४१।।

**चातकप्रिया हिन्दी**--हे नरश्रेष्ठ! उस परमात्मा के विषय में वेद स्वतःप्रमाण हैं। अतः आर्यजन वेद का गंभीर अध्ययन करके, उसी ज्ञान से वेदस्वरूप ब्रह्म को प्राप्त कर लेते हैं। वेदवेत्ता पुनः भौतिक प्रपञ्च को प्राप्त नहीं होते। वे तो परमात्मा का साक्षात्कार करके मुक्त हो जाते हैं।।४१।।

**न वेदानां वेदिता कश्चिदस्ति**
**वेद्येन वेदं न विदुर्न वेद्यम्।**
**यो वेद वेदं स च वेद वेद्यं**
**यो वेद वेद्यं न स वेद सत्यम्।।४२।।**

**अन्वयः**--वेदानां कश्चित् वेदिता न अस्ति, वेद्येन न वेदम् न वेद्यं विदुः। च यः वेदं वेद सः वेद्यं वेद, यः वेद्यं वेद सः सत्यं न वेद।।४२।।

**चातकप्रिया सं० व्या०**-एवमपि ब्रह्म दुर्ज्ञेयमेवेत्याह-न वेदानामिति। वेदानाम् = ऋगादीनाम्, मध्ये, कश्चिदपि = एकोऽपि, वेदः, वाङ्मनसातीतस्य परमेश्वरस्य, वेदिता = ज्ञाता, न = नास्ति। कस्मात्कारणादेवमर्स्ति? उच्यते-वेद्येन = जड़रूपेण चेतसा, वेदं = संविद्रूपं परात्मानम्, न विदुः = न जानन्ति। न = नहि, वेद्यं = प्रपञ्चमपि, विदुः। यस्मात् संविदधिकारानुगामिनी सर्वसिद्धिः तस्मात् यः = पुरुषः, वेदं = संवित्स्वरूपं परमात्मानं, वेद = जानाति, स च = स एव विशेषज्ञः, इदं = एतत्, सर्वम् = निखिलम्, वेद्यम् = प्रपञ्चादि। आत्माऽनात्मा द्वावेव जडस्य विषयौ न स्तः। अतो परमात्मानं ज्ञात्वैव प्रपञ्चज्ञानमपि सिद्ध्यति। यः केवलं बहिरिन्द्रियाधीनो बहिर्मुखो वेद्यमेव=

अनात्मवस्त्वेव, वेद = जानाति, सः, सत्यं = शाश्वतम्, ब्रह्म न वेद जानाति। तथा च श्रुतयः-"आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्", "एकविज्ञानेन सर्वं विज्ञातम्।", "परांचि खानि व्यतृणत्स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन्।" इति।।४२।।

चातकप्रिया हिन्दी--ब्रह्म फिर भी हर प्रकार से दुर्ज्ञेय है-यह तथ्य उजागर करते हुए कहते हैं-इस संसार में कोई भी पुरुष वेदों के परम रहस्य को नहीं जान पाता। क्योंकि मन स्वयं ही ज्ञेय है। उस ज्ञेय मन-बुद्धि से वेदरहस्य और ब्रह्म दोनों बड़ी कठिनाई से ज्ञात होते हैं। ज्ञानस्वरूप वेदों को जानने वाला ही यथार्थ का ज्ञाता है। जो मनुष्य कर्मप्रवर्तक वेद को जानता है, वह ज्ञेय प्रपञ्च को ही जानता है और जो केवल लौकिक पदार्थों को जानता है अर्थात् सकाम भाव से कर्म करता है, वह ब्रह्मतत्त्व (सत्य) को नहीं जानता।।४२।

यो वेद वेदान् स च वेद वेद्यं
न तं विदुर्वेदविदो न वेदाः।
तथापि वेदेन विदंति वेदं
ये ब्राह्मणा वेदविदो भवन्ति।।४३।।

अन्वयः--च यः वेदान् वेद स च वेद्यं वेद। तं वेदविदः न विदुः, न वेदाः, तथापि ये ब्राह्मणाः वेदविदः भवन्ति ते वेदेन वेदं विदन्ति।।४३।।

चातकप्रिया सं०व्या०--यः कश्चित् पुरुषोऽधिकारी वेदान् = ऋगादीन्, वेद = जानाति, स च = केवलम्, वेद्यं = प्रपञ्चम्, वेद = जानाति, वेदस्य जडत्वात् संविद्भास्यत्वाच्च। अतः तम् = परमात्मानम्, वेदविदः= वेदपाठिनः संकामकर्मकारिणः, न, विदुः = जानन्ति, परमात्मनो वाचामगोचरत्वात्। न वेदाः = वेदा अपि, तं = परमेश्वरम्, न विदुः= न विषयीकुर्वन्ति-वेदास्तु परमात्मानं येन केनापि विधिना लक्षणैव बोधयन्ति। ननु तर्हि कथं ब्रह्मबोधः स्यात्। प्रमाणाभावात् वेदरूपस्य

ब्रह्मणोऽसत्वापत्तिः स्यादित्याशङ्क्याह-तथापीति। यद्यपि ब्रह्म वागाद्यविषयं तथापि ये ब्राह्मणाः श्रोत्रियाः ब्रह्मनिष्ठाः वेदवेत्तारः,ते वेदेन = ऋगादिनैव, वेदं = ब्रह्म, विदन्ति = जानन्ति। सर्वेषां ऋगादीनां वाग् विस्ताराणामखण्डे ब्रह्मणि एव तात्पर्यपर्यवसानादिति।।४३।।

**चातकप्रिया हिन्दी**--जो मनुष्य ऋग् आदि वेदों को जानता है, वह सृष्टि के रहस्य को भी जान लेता है, परन्तु केवल वेदों का पाठ करने वाला उस परम आत्म तत्त्व को नहीं जान पाता। उस परमात्मा को स्वयं वेद भी नहीं जानते, फिर भी जो ब्रह्मनिष्ठ ब्राह्मण वेदों के रहस्य का ज्ञान कर लेते हैं, वे उसी वेद से अन्तः-करण के शुद्ध हो जाने से उसमें निहित परमात्म तत्त्व को भी जान जांते हैं।।४३।।

**धामांशभागस्य तथाहि वेदा**
**यथा च शाखा च महीरुहस्य।**
**संवेदने चैव यथाऽऽमनन्ति**
**तस्मिन्हि नित्ये परमात्मनोऽर्थे।।४४।।**

**अन्वयः**--च यथा महीरुहस्य शाखा हि धामांशभागस्य यथा तथा हि वेदाः परमात्मनः नित्ये तस्मिन् संवेदने अर्थे च एव आमनन्ति।।४४।।

**चातकप्रिया सं० व्या०**--दृष्टान्तमुखेन तमेवार्थं द्रढ़यति-धामांशभागस्य= धामः तेजः तन्मयाः अंशा यस्य स तेजोमयः चन्द्रः "रात्रिधामश्चन्द्रः" इति श्रुतेः। तस्य भागः (अंशः) कला प्रतिपद्गता तस्य, संवेदने = ज्ञापने दर्शने, यथा = येन प्रकारेण, महीरुहस्य = वृक्षस्य, शाखा उपादीयते, तथा हि = तद्वदेव, वेदाः = ऋगादयः, तस्यैव परमात्मनः = ब्रह्मणः, संवेदने = परमपुरुषार्थरूपे सत्ये, नित्ये = विनाशरहिते, हेतवः भवन्ति इति = एवम्, आमनन्ति = प्रतिपादयन्ति। वेदाः वाचामगोचरं परमेश्वरं साक्षात् न प्रतिपादयन्ति।।४४।।

**चातकप्रिया हिन्दी**--जैसे द्वितीया या प्रतिपत् के चन्द्रमा की कला को दिखाने के लिए वृक्ष की शाखा का सहारा लिया जाता है, वैसे ही सूक्ष्मभूत सत्यस्वरूप परमात्मा को बताने के लिए वेदों का सहारा लिया जाता है-ऐसा विद्वान् मानते हैं। तात्पर्य यह है कि वेदशास्त्र ब्रह्मज्ञान के लिए मूल कारणस्वरूप होते हुए भी ब्रह्म का साक्षात् प्रतिपादन नहीं करते।।४४।।

**अभिजानामि ब्राह्मणमाख्यातारं विचक्षणम्।**
**परं हि तत्परं ब्रह्म जानात्येव हि ब्राह्मणः।।४५।।**

**चातकप्रिया सं० व्या०**--विचक्षणम् = कुशलं उपक्रमोपसंहारैकरूप्यादिषड्विधतात्पर्यलिङ्गानुसारं वाक्यार्थवर्णननिपुणम्, आख्यातारम्= ब्रह्मतत्त्ववक्तारम्, एव, ब्राह्मणं = ब्रह्मविदम्, अभिजानामि = लक्षणतो जानामि। आख्यातारं ब्राह्मणं विचक्षणं जानामीति कथमुच्यते? तत्राह-किन्तु-ब्राह्मणः = ब्रह्मविद्, तत्परं ब्रह्म जानात्येव। तथाहि-"ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासे तथा बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिर्भवति। मौनं चामौनं च निर्विद्याथ ब्राह्मणः" इति। पाण्डित्यं निर्विद्य स्थितः पुरुषः क्षिप्रं बाल्यादिकं निर्विद्य ब्राह्मणो भवति।।४५।।

**चातकप्रिया हिन्दी**--हे राजन्! वेद के तात्पर्य को समझ कर ठीक ठीक व्याख्या करने वाला पुरुष ही मेरे मत में ब्राह्मण है, वही परब्रह्म को भी जानता है।।४५।।

**नास्य पर्येषणं गच्छेत् प्रत्यर्थिषु कथंचन।**
**अविचिन्वन्निमं वेदे, ततः पश्यति तं प्रभुम्।।४६।।**

**चातकप्रिया सं० व्या०**--आत्मनः कुत्रान्वेषणं कुर्यादिति कथयति-अस्य = आत्मनः, पर्येषणम् = अन्वेषणं दर्शनोपायम्, प्रत्यर्थिषु = आत्मत्वेन प्रथमानेषु देहेन्द्रियादिषु देहस्य पंचसु कोशेषु, कथंचन = कदाचन, न, गच्छेत् = कुर्यात्। कस्मात् तत्र तत्र अनात्मभूतेषु पदार्थेषु

आत्मान्वेषणं न कुर्यात् -कथयति-अव्यक्तमालम्बनं कष्टसाध्यं भवति। यथोक्तम् -"अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते।" यतः, इमं =आत्मानं, विषयादिषु अविचिन्वन् = अचिन्तयन्, एव, पुरुषः, वेदे = ब्रह्मणः स्वरूपतटस्थलक्षणप्रतिपादकवेदादिशास्त्रे, तं प्रभुं = सर्वसामर्थ्यवन्तं परमात्मानं पश्यति = आत्मत्वेन साक्षात्करोति तं निष्कलं ध्यायमान इति।।४६।।

**चातकप्रिया हिन्दी**--आत्मा को देखने की जिज्ञासा वाले पुरुष को आत्मा का अन्वेषण विषयों तथा देहादि में नहीं करना चाहिए। विषयों में आत्मानुचिन्तन बन्द करने के बाद ही कोई व्यक्ति वेद में उस परमात्मा का दर्शन कर पाता है।।४६।।

**तूष्णींभूत उपासीत न चेच्छेन्मनसा अपि।**
**अभ्यावर्तेत ब्रह्मास्मै बह्वनन्तरमाप्नुयात्।।४७।।**

**चातकप्रिया सं० व्या०**--तूष्णींभूतः = स्वात्मातिरिक्तं सर्वं प्रपञ्चं परित्यज्य केवलो भूत्वा, स्वात्मानमेव, उपासीत = ध्यायेत् चिन्तयेत् पूजयेच्च। मनसापि = चेतसापि, नेच्छेत् = विषयेच्छां न कुर्यात् - संस्कारजनकत्वात्। पुनः आत्माभिलाषिणः विषयभोगस्य का कथा। एवम्भूताय तूष्णींभूताय साधकाय, ब्रह्म = अपूर्वादिलक्षणम्, अभ्यावर्तेत = सम्मुखीभवति। तथा च श्रुतिः-"यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनुं स्वाम्" इति। अनन्तरम् = तत्पश्चात्, तमसः परं भूमानं ब्रह्म, आप्नुयात् = अनुभवेत्।।४७।।

**चातकप्रिया हिन्दी**--शरीर, इन्द्रिय आदि सम्पूर्ण अनात्मभूत पदार्थों का मन से भी चिन्तन - ध्यान न करता हुआ अन्तर्वृत्ति होकर केवल ब्रह्म (परमात्मा) की उपासना करनी चाहिए। ऐसा करने वाला साधक "अहं ब्रह्मास्मि" की स्थिति में पहुँच कर आत्मसाक्षात्कारात्मक ज्ञान की प्राप्ति कर लेता है। तत्पश्चात् उसका

कभी भी बहुरूपात्मक व्यापक ब्रह्म से पार्थक्य नहीं होता।।४७।।

**मौनाद्धि मुनिर्भवति नारण्यवसनान्मुनिः।**
**अक्षरं तं तु यो वेद स मुनिः श्रेष्ठ उच्यते।।४८।।**

**चातकप्रिया सं० व्या०**--हि = वस्तुतः, साधकः, मौनात् = तूष्णींभावादेव, मुनिः = मननशीलः, भवति = सम्पद्यते, अरण्यवासात्= संन्यासमात्रात्, मुनिर्न भवति। तेषां मुनीनामपि मध्ये, यस्तु पुनः तम् अक्षरं = अविनाशिनं परमेश्वरमात्मानं वा, वेद = वेत्ति-"**अयमहमस्मि**", इति, सः मुनिः श्रेष्ठः = सर्वोत्तमः कथ्यते। तथा च श्रूयते-"**एतमेव विदित्वा मुनिर्भवति**"।।इति।।४८।।

**चातकप्रिया हिन्दी**--वस्तुतः पूर्वोक्त बुद्धि गुहा में आत्मचिन्तनरूप मौन धारण करने से ही कोई साधक मुनि की संज्ञा से विभूषित होता है। कोई मनुष्य केवल गेरुआ वस्त्र पहनने या वन में निवास करने–मात्र से मुनि नहीं होता। उसमें भी जो अविनाशी ब्रह्म का साक्षात्कार कर लेता है, वह श्रेष्ठ मुनि कहलाता है।।४८।।

**सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते।**
**तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा।।४९।।**

**चातकप्रिया सं० व्या०**--सर्वार्थानां = सर्वपदार्थानाम्, व्याकरणात्= व्युत्पादनात् -ब्रह्मयोनय एव सर्वार्था इति विवेचनात्, वैयाकरणः व्याकरणविद्, न पुनः शब्दैकदेशव्याकरणात्, वैयाकरण इति। किमिति सर्वार्थव्याकरणमिति चेदुच्यते-तन्मूलतो व्याकरणम् - तत् = अक्षरं ब्रह्म, मूलम् = हेतुः तस्मात्, नामरूपात्मकस्य प्रपञ्चस्य व्याकरणम्= विवर्तः, तथा च श्रूयते-"**अनेन जीवेन अनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि**" इति। म्रत एव यः कश्चिद् व्याकरणवेत्ता विद्वान् तद् ब्रह्म तथैव ब्रह्मण एव रूपेण, व्याकरोति = विवेचयति सोऽपि वैयाकरण इति। वैयाकरणो ब्रह्मविदिति फलितार्थः।।४९।।

चातकप्रिया हिन्दी--समस्त अर्थों का विवेचन करने के कारण ही कोई पुरुष वैयाकरण होता है। केवल शब्दैकदेश का विवेचक वैयाकरण की उपाधि नहीं पाता। उसी प्रकार सम्पूर्ण नामरूपात्मक प्रपञ्च को स्वयं से व्यक्त करने वाला ब्रह्म भी वैयाकरण है। परमेश्वर से बड़ा वैयाकरण कोई दूसरा नहीं।।४९।।

**प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः।**
**सत्ये वै ब्रह्मणि तिष्ठंस्तद् विद्वान् सर्वविद् भवेत्।।५०।।**

**चातकप्रिया सं० व्या०**-लोकानां = भूरादीनां चतुर्दशलोकानाम्, प्रत्यक्षदर्शी = साक्षाद् द्रष्टा, नरः = मनुष्यः, सर्वदर्शी = सर्वद्रष्टा, भवेत् = भवितुं शक्नोति, किन्तु सः परमात्मदर्शी न भवति। वै = पुनश्च, सत्ये = ब्रह्मणि तिष्ठन् = आत्मत्वेन स्थितः सन्, विद्वान् = वेत्ता, सर्वविद् = सर्वज्ञः, भवति। ब्रह्मनिष्ठः सर्वज्ञ इति तात्पर्यम्।।५०।।

**चातकप्रिया हिन्दी**--भू आदि समस्त लोकों को प्रत्यक्ष देखने वाला व्यक्ति सर्वदर्शी कहा जाता है परन्तु सत्यस्वरूप ब्रह्म में सतत अवस्थित रहने वाला व्यक्ति सर्वज्ञ हो जाता है। सर्वज्ञ सर्वदर्शी से महान् होता है।।५०।

**ज्ञानादिषु स्थितोऽप्येवं क्षत्रिय ब्रह्म पश्यति।**
**वेदानां चारपूर्वेण चैतद् विद्वन् ब्रवीमि ते।।५१।।**

*।।इति द्वितीयोऽध्यायः।।*

**चातकप्रिया सं० व्या०**-इदानीमध्यायार्थमुपसंहरति-ज्ञानादिना। क्षत्रिय= राजन् !, ज्ञानादिषु = ज्ञानं चेत्यादिना (अ०२-श्लोक-१९) प्रागुक्तेषु स्थितः, सत्यादिरूपे अष्टप्रकारकेऽप्रमादे च स्थितः अपि, वेदानाम् = ऋगादीनां श्रुतीनाम्, चारपूर्वेण = श्रवणमनननिदिध्यासिनेनैव, ब्रह्म= परमात्मानम् आत्मानं वा, पश्यति = अनुभवति, एतत् = इदम्,

सर्वम् = निखिलं यथार्थम् ते = तुभ्यम्, ब्रवीमि = कथयामि। साधनानामवलम्बनं विना ब्रह्मणः साक्षात्कारो न भवति। सोपानक्रमस्त्वावश्यक एव। यथा नृसिंहतापनीयोपनिषदि- "ओतानुज्ञात्रनुज्ञाऽविकल्पैः" इति। ब्रह्मप्राप्तिः वेदान्तश्रवणपूर्वक- मेवेत्याशयः।।५१।।

*।।इति सनत्सुजातीयदर्शनस्य चातकप्रियाख्यायां संस्कृतव्याख्यायां द्वितीयोऽध्यायः।।*

चातकप्रिया हिन्दी--हे राजन् ! इस प्रकार ज्ञानादि गुणों से युक्त भी व्यक्ति वेदान्त आदि शास्त्रों के श्रवण, मनन और निदिध्यासन से ही ब्रह्म का साक्षात्कार करता है। यही बात आगे के अध्याय में तुमसे कहूँगा।।५१।।

*।।सनत्सुजातीय दर्शन के द्वितीय अध्याय की "चातकप्रिया" व्याख्या समाप्त।।*

❑

# अथ तृतीयोऽध्यायः

*धृतराष्ट्र उवाच-*

सनत्सुजात यदि मां परार्थां
ब्राह्मीं वाचं वदसि हि विश्वरूपाम्।
परां हि कार्येषु सुदुर्लभां कथां
प्रब्रूहि मे वाक्यमेवं कुमार।।१।।

**अन्वयः**--सनत्सुजात यदि इमां परार्थां हि विश्वरूपां ब्राह्मीं वाचं वदसि हि कार्येषु परां दुर्लभां कथां मे, प्रब्रूहि, कुमार ! एवं वाक्यम्।।१।।

**चातकप्रिया सं० व्या०**--प्राप्य ब्रह्मप्रतिपादकेऽस्मिन्नध्याये ब्रह्मचर्यादि साधनं ज्ञातुं धृतराष्ट्रः कथयति-सनत्सुजातेति। सनत्सुजात ! यदि = अस्मात्, इमां परार्थां = सर्वोत्तमां, हि = तथा, विश्वरूपां = विश्ववन्द्यां नानारूपां, ब्राह्मीं = ब्रह्मसम्बन्धिनीं, वाचं = विद्याम्, वदसि = उपदिशसि, हि = वस्तुतः, सा विद्या, कार्येषु = जगत्प्रपञ्चेषु, परां= अलौकिकीं, सुदुर्लभां = दुष्प्राप्यां, कथां = कथनीयाम्, मे = मां, मह्यं वा, प्रब्रूहि = प्रवद, कुमार ! एवम्= एतादृशम् , वाक्यं = निवेदनम्। त्वं परमपुरुषार्थसाधनभूतां सुदुर्लभां ब्रह्मविद्यां वदसि, तस्मात् मामपि वक्तुमर्हसीत्याशयः।।१।।

**चातकप्रिया हिन्दी**--धृतराष्ट्र बोले–हे सनत्सुजात! आप उत्कृष्ट अर्थवती नाना प्रकार की ब्रह्मसम्बन्धिंनी वाणी कह रहे हैं। इस प्रपञ्च में जो दुर्लभ हो उसका उपदेश कीजिए। आप ही ब्रह्मविषय का दिव्य उपदेश देने में समर्थ हैं।।१।।

*सनत्सुजात उवाच-*

नैतद् ब्रह्म त्वरमाणेन लभ्यं
यन्मां पृच्छस्यभिषंगेण राजन्।

बुद्धौ प्रलीने मनसि प्रचिन्त्या
विद्या हि सा ब्रह्मचर्येण लभ्या।।२।।

**अन्वयः**-राजन् एतत् ब्रह्म त्वरमाणेन न लभ्यम् , यत् अभिषङ्गेण मां पृच्छसि, मनसि बुद्धौ प्रलीने प्रचिन्त्या हि सा विद्या ब्रह्मचर्येण लभ्या।।२।।

**चातकप्रिया सं० व्या०**--राजन् = नृप !, एतत् = इदम् , ब्रह्म, त्वरमाणेन = शीघ्रकारिणा पुरुषेण, न = नहि, लभ्यं = प्राप्यम् हृदयङ्गमं भवितुं नार्हति, यत् = यस्य विषये, अभिषङ्गेण = आग्रहपूर्वकम्, मां = सनत्सुजातम्, पृच्छसि = प्रश्नासि, तद् ब्रह्म कथं लभ्यमित्याह-मनसि = मनस्तत्त्वे, बुद्धौ = बुद्धितत्त्वे, प्रलीने = विलीने सति, प्रचिन्त्या= प्रगतं चिन्त्यं यस्यां सा, निरुद्धाखिलवृत्तिका काचिदैकावस्था विद्येत्युक्ता। अयमाशयः--इन्द्रियाणां निरोधेन मनोमात्रं शिष्यते, तच्च मनोऽनुपरतं संकल्पाद्यात्मकं तिष्ठति। तस्मिँश्चापि मनसि "अहं ब्रह्मास्मीति" निश्चयलक्षणायां बुद्धौ विलीने सति यैका निरुद्धसर्ववृत्तिकावस्थेति सा ब्रह्मविद्येति। सा चेयं ब्रह्मोपलब्धिविद्या केवलेन ब्रह्मचर्येण = वक्ष्यमाणस्वरूपेण, लभ्या = प्राप्येति।।२।।

**चातकप्रिया हिन्दी**--राजन् ! जिस तत्त्वज्ञान के विषय में अति शीघ्र ज्ञान प्राप्त करने के लिए मुझसे आग्रह कर रहे हो, वह तत्त्वज्ञान इतनी शीघ्रता से कभी भी नहीं मिलता। उसकी प्राप्ति की विधि इस प्रकार है--सुनो--सम्पूर्ण इन्द्रियों के निरोध हो जाने के बाद संकल्प-विकल्पात्मक मन जब बुद्धि--गुहा में लीन हो जाता है और "मैं ब्रह्म हूँ" केवल यही भाव बुद्धि में स्थित रहता है, तब एक प्रकार की जो निरुद्धसर्ववृत्तिक अवस्था होती है, वही ब्रह्मविद्या है।उस विद्या की प्राप्ति केवल ब्रह्मचर्य के पालन से ही होती है।।२।।

*किञ्च-*

आद्यां विद्यां वदसि हि सत्यरूपां
या प्राप्यते ब्रह्मचर्येण सद्भिः।
यां प्राप्यैनं मर्त्यलोकं त्यजन्ति
या वै विद्या गुरुवृद्धेषु नित्या।।३।।

अन्वयः--हि सत्यरूपाम् आद्यां विद्यां वदसि या सद्भिः ब्रह्मचर्येण प्राप्यते यां प्राप्य एनं मर्त्यलोकं त्यजन्ति गुरुवृद्धेषु नित्या।।३।।

चातकप्रिया सं० व्या०--हि = किञ्च, सत्यस्वरूपां = सत् लक्षणाम्, आद्यां = सर्वोत्तमामकार्यभूताम् , विद्यां, वदसि = पृच्छसि, या = आद्या विद्या, सद्भिः = सदाचारपरायणपुरुषैः, ब्रह्मचर्येण = उपसंहृतान्तःकरणेनैव, प्राप्यते = लभ्यते। यां = ब्रह्मविद्याम्, प्राप्य, एनम्, मर्त्यलोकं = प्रपञ्चात्मकजगत्, शरीरं वा, त्यजन्ति ब्रह्मविद्याविदः इति शेषः। वै = च, या विद्या = ब्रह्मविद्या, गुरुवृद्धेषु = गुरुणा विद्यादानादिना, वृद्धेषु = वर्द्धितेषु, शिष्येषु सद्गुरुषु वा, नित्या = नित्यं प्रकाशिता भवति।।३।।

चातकप्रिया हिन्दी--और हे राजन्! तुम जिस ब्रह्मविद्या के विषय में पूछ रहे हो वह सत्पुरुषों को ब्रह्मचर्य के आचरण से ही मिलती है। जिस ब्रह्मविद्या को प्राप्त कर लोग मर्त्यलोक का परित्याग कर देते हैं, वह सद्गुरुओं और सत् शिष्यों में निरन्तर प्रकाशित होती रहती है।।३।।

*धृतराष्ट्र उवाच-*

ब्रह्मचर्येण या विद्या शक्या वेदितुमञ्जसा।
तत्कथं ब्रह्मचर्यं स्यादेतद् ब्रह्मन् ब्रवीहि मे।।४।।

चातकप्रिया सं० व्या०--ब्रह्मन् = ब्रह्मर्षे ! ब्रह्मचर्येण = ब्रह्मचर्यस्य आचरणेन, या विद्या = ब्रह्मविद्या, अञ्जसा = सरलतया, वेदितुम्=

ज्ञातुम्, शक्या = सम्भवा, तत् = ब्रह्मचर्यं, कथं = कीदृशम्, स्यात् मे= मम, ब्रवीहि = वद।।४।।

**चातकप्रिया हिन्दी**--धृतराष्ट्र ने कहा-हे महर्षे, वह ब्रह्मविद्या यदि ब्रह्मचर्य के पालन से ही प्राप्त हो सकती है तो आप कृपा कर उस ब्रह्मचर्य के पालन की विधि मुझे बतलावें।।४।।

*सनत्सुजात उवाच*--

**आचार्ययोनिमिह ये प्रविश्य**
**भूत्वा गर्भं ब्रह्मचर्यं चरन्ति।**
**इहैव ते शास्त्रकारा भवन्ति**
**विहाय देहं परमं यान्ति सत्यम्।।५।।**

**चातकप्रिया सं० व्या०**--ये = मुमुक्षवः, इह = अस्मिन् लोके, आचार्ययोनिम् = आचार्यगृहम् , प्रविश्य = गत्वा, गर्भं = निष्कपट-सेवयात्मीयत्वम्, भूत्वा = प्राप्य, ब्रह्मचर्यं = वीर्यरक्षणपूर्वकं गुरुसेवादिकम्, चरन्ति = कुर्वन्ति, ते = मुमुक्षवः, इहैव = अस्मिन्नेव लोके, शास्त्रकाराः= शास्त्रविदः, भवन्ति। ततः परं देहं = शरीरम्, विहाय = परित्यज्य, परमं = सर्वोत्तमम्, सत्यं = ब्रह्म सत्यलोकं वा, यान्ति = प्राप्नुवन्ति। सत्यब्रह्मणा सहैक्यं लभन्त इति।।५।।

**चातकप्रिया सं० व्या०**--भगवान् सनत्सुजात ने कहा-हे राजन् ! जो मुमुक्षुजन इसी लोक में रहते हुए आचार्य के घर जाकर उनका परम शिष्य बन जाते हैं तथा निष्कपट भाव से सेवा करते हुए आचार्य-वचनों में दृढ़ निष्ठा रखते हैं,वही ब्रह्मचर्य का पालन करते हैं। ऐसे लोग इसी संसार में शास्त्रमर्मज्ञ हो जाते हैं और नाशवान् शरीर का त्याग कर ब्रह्मरूपी परम सत्य पद प्राप्त कर लेते हैं।।५।।

*किञ्च*--

**अस्मिन् लोके विजयन्तीह कामान्**
**ब्राह्मीं स्थितिमनुतितिक्षमाणाः।**

**त आत्मानं निर्हरन्तीह देहात्**
**मुञ्जादिषीकामिव धीरभावात्।।६।।**

**चातकप्रिया सं० व्या०-**ते = आचार्यसान्निध्यं गताः ब्रह्मचर्यादि-साधनपरा मुमुक्षवः, अस्मिन् = वर्तमाने, लोके = लोक्यते भोगसाधनतयोपयुज्यत इति शरीरम्, इह जगति च, कामान् = सम्पूर्णसङ्कल्पादीन्, विजयन्ति = जयन्ति। आर्षत्वाद् "विपरभ्यां जेरि"ति आत्मनेपदविधानमुत्क्रम्य विजयन्ति पदमिति। अर्थात् जितेन्द्रियाः सम्पद्यन्ते। पुनश्च ब्राह्मीं स्थितिम्= ब्रह्मप्राप्तियोग्यामवस्थाम्, अनुतितिक्षमाणाः = प्रतिदिनं सहमानाः सन्तः, ते = मुमुक्षुसाधकाः, धीरभावात् = धैर्यपूर्वकम्, अभ्यासवशात्, मुञ्जात्= तन्नामकात् तृणविशेषात्, इषीकां = अन्तःस्थां तृणयष्टिम् , इव = यथा, देहात्= अन्नमयादिपञ्चकोशमयनिजशरीरात्, आत्मानं = तत्साक्षिणं चिन्मात्रं सत्यस्वरूपं परमतत्त्वं हृदिस्थम् , निर्हरन्ति = निष्कृष्य पृथक्कुर्वन्ति। स्वात्मानं प्रतिपद्यन्त इति। यथा श्रूयते कठोपनिषदि-

**अंगुष्ठमात्रः पुरुषोऽन्तरात्मा**
**सदा जनानां हृदये सन्निविष्टः।**
**तं ह स्वाच्छरीरात् प्रवृहेन्**
**मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतम्।।इति।।**

**चातकप्रिया हिन्दी-**इस मर्त्यलोक में अपनी सम्पूर्ण कामनाओं पर विजय प्राप्त कर लेने वाले, अनेक प्रकार के शीत-उष्णादि द्वन्द्वों को सह लेने वाले मुमुक्षु साधक मूँज से सींक के समान पंचकोशात्मक अपने भौतिक शरीर से पृथक् करके हृदय-गुहा में स्थित आत्म-तत्त्व को यथार्थतः जान लेते हैं।।६।

**शरीरमेतौ कुरुतः पिता माता च भारत।**
**आचार्यतस्तु यज्जन्म तत् सत्यं वै तथामृतम्।।७।।**

**चातकप्रिया सं० व्या०**--मातृपितृव्यतिरेकेण आचार्ययोनित्वं कथमिति दर्शयति--भारत! = राजन् , एतौ = इमौ, माता पिता च = जननीजनकौ, शरीरमेव = स्थूलं पाञ्चभौतिकं देहमेव, कुरुतः = जनयतः, इदं च पित्रोः शरीरद्वयसम्पर्काद् यच्छरीरं जायते तत् विनाशशीलम् = असत्यम्, तु = किन्तु, आचार्यतः = आचार्ययोनेः, यज्जन्म = जननम्, तत् = जन्म, सत्यं = परमार्थरूपम्, तथा वै = तदेव, निश्चितरूपेण अमृतं= जन्ममरणवर्जितम्, तस्मात् आचार्य एव वास्तविको जनकः। यथा प्रश्नोपनिषदि श्रूयते-"त्वं हि नः पिता यो अस्माकं अविद्यायाः परं पारं तारयसि" इति। आपस्तम्बोऽप्येवमेवाह-"स हि विद्यातस्तत्तं जनयति तत् श्रेष्ठं जन्म शरीरमेव मातापितरौ जनयतः इति" इति।।७।।

**चातकप्रिया हिन्दी**--हे राजन् , जिन्हें सामान्यतया माता-पिता के रूप में जाना जाता है, वे दोनों तो परस्पर शारीरिक सम्पर्क करके केवल इस स्थूल शरीर को ही पैदा करते हैं, परन्तु आचार्य के गर्भ से--उनके सान्निध्य से--जो जन्म मिलता है, वही सत्य है--विनाश से रहित है। आशय यह है कि जन्म--मरणादि बन्धन से युक्त शरीर की उत्पत्ति में माता-पिता का योगदान रहता है, किन्तु आचार्य चरणों में जा कर उनकी कृपा से ज्ञान प्राप्त कर जीव अज्ञान तिमिर को दूर कर लेता है तथा उसके बाद अमृतमय ब्रह्म का साक्षात्कार कर लेता है।।७।।

स आवृणोत्यमृतं सम्प्रयच्छन्
तस्मै न द्रुह्येत्कृतमस्य जानन्।
गुरुं शिष्यो नित्यमभिवादयीत
स्वाध्यायमिच्छेच्च सदाऽप्रमत्तः।।८।।

**अन्वयः**--सः अमृतं संप्रयच्छन् आवृणोति (अतः) अस्य कृतं जानन् शिष्यः तस्मै न द्रुह्येत्। गुरुं नित्यम् अभिवादयीत च सदा अप्रमत्तः

स्वाध्यायम् इच्छेत्।।८।।

**चातकप्रिया सं० व्या०**--सः = आचार्यः, अमृतं = मोक्षं पूर्णानन्दं ब्रह्म वा, सम्प्रयच्छन् = आत्मत्वेन अनुभावयन्, आवृणोति = शिष्य-हृदयमापूरयति, अतः तस्मै = ब्रह्मानन्ददायकाय गुरवे, न द्रुह्येत् = द्रोहं न कुर्यात्, कस्मात् न द्रुह्येत् -अस्य = आचार्यस्य, कृतं = उपकारम्, जानन् = संस्मरन्। तथा चाह श्रुतिः-

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः।।इति।।**

एवमेव समर्थयत्यापस्तम्बः -**"तस्मै न द्रुह्येत् कदाचन स हि विद्यातस्तं जनयति।"** इति। गुरुणा कृतमुपकारो न विस्मर्त्तव्य इत्याशयः। शिष्यस्य कर्त्तव्यं निर्दिशन्नाह--शिष्यः = अन्तेवासी, सदा = सततम्, अप्रमत्तः= गुरुशुश्रूषायां प्रमादरहितः सन् , गुरुं = आचार्यम्, नित्यम् = प्रतिदिनम्, अभिवादयीत = देवमिवमुपासीत, तथा च स्वाध्यायं = श्रवणादिकम्, इच्छेत् = कुर्यात् निष्ठापूर्वकमिति।।८।।

**चातकप्रिया हिन्दी**--आचार्य की महिमा का वर्णन करते हुए कहते हैं--आचार्य अपने दिव्य उपदेश के द्वारा शिष्य को आत्मज्ञान से प्रपूर्ण कर देता है। अतः शिष्य को चाहिए कि वह आचार्य के उपकार का सतत स्मरण करता हुआ कभी भी उनसे द्रोह न करे। शिष्य को अपने सद्गुरु का देवता के समान नित्य पूजन करना चाहिए। सेवा में कभी प्रमाद नहीं करना चाहिए और निरन्तर श्रवण आदि में संल्लग्न रहना चाहिए।।८।।

*इदानीं श्लोकचतुष्टयेन ब्रह्मचर्यं वर्णयति-*

**शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः।**
**ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यते।।९।।**
**यथा नित्यं गुरौ वृत्तिर्गुरुपत्न्यां तथाऽऽचरेत्।**
**तत् पुत्रे च तथा कुर्वन् द्वितीयः पाद उच्यते।।१०।।**

**अन्वयः**--यः शुचिः शिष्यवृत्तिक्रमेण एव विद्याम् आप्नोति, अस्य ब्रह्मचर्यव्रतस्य प्रथमः पादः उच्यते। यथा गुरौ नित्यं वृत्तिः तथा गुरुपत्न्याम् आचरेत् तथा तत्पुत्रे च कुर्वन् द्वितीयः पाद उच्यते।।९-१०।।

**चातकप्रिया सं० व्या०**--चतुष्पादं ब्रह्मचर्यं विवृणोति--यः = कश्चित् शिष्यः, शुचिः = वाक्कायमनःशुद्धियुतः सन्, शिष्यवृत्तिक्रमेण = शिष्यः = उपनेयः, तस्य या वृत्तिः = शास्त्रोक्ताचारनियमः, तत्क्रमेण तत्पालनपूर्वकं नान्यथेति तात्पर्यम्, यथोक्तं प्राक् -"आचार्ययोनिमिह ये प्रविश्येति" श्रुतिरप्याह-"**समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसरेत्**" एवमुक्तक्रमेण विद्योपलब्धिः ब्रह्मचर्यस्य प्रथमः = आदिः, पादः = चरणः, उच्यते = कथ्यते।।९।।

यथा = येन प्रकारेण, गुरौ = आचार्ये, नित्यम् = सदा, वृत्तिः= शुश्रूषादिपराश्रद्धा भवेत्, तथा = तेनैव प्रकारेण, गुरुपत्न्यां = आचार्यस्यार्द्धाङ्गिन्यामपि, आचरेत् = व्यवहारं, सेवादिकं कुर्यात्, तथा च तत्पुत्रे = गुरोरात्मजेऽपि श्रद्धां कुर्वन् कश्चित् ब्रह्मचर्यस्य द्वितीयं पादं पूर्णं करोति। यथा च श्रूयते रघुवंशे-"गुरोः सदारस्य निपीड्य पादम्." इति। एवमेव द्रौपद्याः वचनं अश्वत्थाम्नः निगृहीतस्य दर्शनकाले-

उवाच चाहसन्त्यस्य बन्धनानयनं सती।
मुच्यतां मुच्यतामेष ब्राह्मणो नितरां गुरुः।।
स एष भगवान् द्रोणः प्रजारूपेण वर्तते।
तस्यात्मनोऽर्धं पत्न्यास्ते नान्वगात् वीरसूः कृपी।।
तद्धर्मज्ञ महाभाग ! भवद्भिर्गौरवं कुलम्।
वृजिनं नार्हति प्राप्तुं पूज्यं बन्धमभीक्ष्णशः।।

आचार्यवदाचार्यदारेषु वृत्तिः। आचार्यवदाचार्यपुत्रेषु वृत्तिः।।१०।।

**चातकप्रिया हिन्दी**--अब चार चरणों वाले ब्रह्मचर्य का वर्णन करते हैं--जो शिष्य शास्त्रोक्त नियम के अनुसार पवित्र होकर आचार्य-चरणों में बैठकर विद्यार्जन करता है, वह ब्रह्मचर्य का प्रथम चरण

कहा जाता है।।९।।

गुरु के समान ही गुरुपत्नी और गुरुपुत्र की सेवा आदि करना-ब्रह्मचर्य का द्वितीय चरण हैं।।१०।।

**आचार्येणात्मकृतं विजानन्**
**ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन।**
**यन्मन्यते तं प्रति हृष्टबुद्धिः**
**स वै तृतीयो ब्रह्मचर्यस्य पादः।।११।।**

**चातकप्रिया सं० व्या०**--आचार्येण = गुरुणा, आत्मकृतं = आत्मनः कृतमुपकारम् , विजानन् = अत्यन्तं मानयन्, अर्थं च = वेदार्थपरम पुरुषार्थं दुःखनिवृत्तिपूर्वकानन्दाप्तिं वा, ज्ञात्वा = अवगम्य, भावितः= गुरुणा कृतार्थीकृतः, अस्मि,इति जानन् यन्मन्यते, तं = आचार्यं, प्रति, हृष्टबुद्धि = प्रसन्नधीः, सन् यत् , स, वै = एव, ब्रह्मचर्यस्य तृतीयः पादः = चरणः, अस्तीति।।११।।

**चातकप्रिया हिन्दी**--आचार्य द्वारा किये गये विद्या-दानरूपी उपकार को मानता हुआ जो उनके प्रति आदर प्रकट करता है और वेदार्थ-रूप परम पुरुषार्थ को पूर्णतया जान कर स्वयं को कृतार्थ समझता है, वही ब्रह्मचर्य का तीसरा चरण है।।११।।

**आचार्याय प्रियं कुर्यात् प्राणैरपि धनैरपि।**
**कर्मणा मनसा वाचा चतुर्थः पाद उच्यते।।१२।।**

**चातकप्रिया सं० व्या०**--आचार्याय = गुरवे, प्राणैः = जीवनेन, धनेन = अर्थादिनापि, तत्त्यागोपयोगादिभिः, कर्मणा = क्रियया, शरीरेण, वाचा = वाण्या, मनसा = हृदयेन च यत् प्रियं = अभीष्टम्, कुर्यात्= आचरेत्, स ब्रह्मचर्यस्य चतुर्थः पाद उच्यते = कथ्यते।।१२।।

**चातकप्रिया हिन्दी**--अपने प्राणों तथा धन आदि का भी समर्पण करते हुए मन, वाणी और कर्म (शरीर-व्यापार) से गुरु का प्रिय

कार्य सम्पन्न करना--ब्रह्मचर्य का चौथा चरण है।।१२।।

*चतुष्पदीं विद्यां दर्शयति-*

**कालेन पादं लभते तथाऽयं**
**तथैव पादं गुरुयोगतश्च।**
**उत्साहयोगेन च पादमृच्छेत्**
**शास्त्रेण पादं च ततोऽभियाति।।१३।।**

**अन्वयः**--अयं कालेन पादं लभते च तथैव गुरुयोगतः पादम्, तथा च उत्साहयोगेन पादम् ऋच्छेत् च ततः शास्त्रेण पादम् अभियाति।।१३।।

**चातकप्रिया सं० व्या०**--सम्प्रति चतुष्पादब्रह्मचर्येण प्राप्यां चतुश्चरणां विद्यां वर्णयन्नाह--कालेनेति। अयं= शिष्यः, कालेन = यथासमयम्, प्रथमं, गुरुयोगतः = गुरोः संसर्गात् चतुष्पाद्याः विद्यायाः प्रथमं पादं= चरणम्, लभते = प्राप्नोति, ततः = तदनन्तरम्, उत्साहयोगेन = बुद्धिविशेषाविर्भावेन, ततः = तत्पश्चात्, कालेन = बुद्धिपरिपाकेन, ततः = तदुपरि, शास्त्रेण = सहाध्यायिभिः सह तत्त्वविचारेण, चतुर्थं पादं लभते। तथा चोक्तम्--

**आचार्यात् पादमादत्ते पादं शिष्यः स्वमेधया।**
**कालेन पादमादत्ते पादं सब्रह्मचारिभिः।।इति।।**

**चातकप्रिया हिन्दी**--इस श्लोक में ब्रह्मचर्य द्वारा लभ्य चतुष्पदी विद्या के विषय में बतलाते हुए कहते हैं कि जब ब्रह्मनिष्ठ गुरु के समीप रहते हुए शिष्य के हृदय में, जन्म--जन्मान्तर के संस्कारोदय के परिणामस्वरूप, ब्रह्मजिज्ञासा उदित होती है, तब उस विद्या का प्रथम पाद पूर्ण होता है। उसके बाद बुद्धि--विशेष के प्राकट्य से गुरु की शरण में सत्संग करना दूसरा पाद होता है। पुनः धर्म-प्राप्ति हेतु निरन्तर सोत्साह प्रयत्न करना तीसरा पाद है और अन्त में तत्त्वचिन्तन करते हुए दृढ़तापूर्वक शास्त्रों का आलोड़न करना

चतुर्थ पाद के रूप में प्राप्त होता है।।१३।।

*ज्ञानादीनामाचार्यसन्निधौ सिद्धिरित्याह-*

**ज्ञानादयो द्वादश यस्य रूपम्**
**अन्यानि चाङ्गानि तथा बलञ्च।**
**आचार्ययोगे फलतीति चाहुः**
**ब्रह्मार्थयोगेन च ब्रह्मचर्यम्।।१४।।**

**अन्वयः**-यस्य ज्ञानादयः द्वादश अन्यानि अङ्गानि बलं च आचार्ययोगे फलतीति आहुः, ब्रह्मार्थयोगेन च ब्रह्मचर्यं फलतीत्याहुः।।१४।।

**चातकप्रिया सं० व्या०**--यस्य = साधकस्य, ज्ञानादयः = प्रागुक्ताः द्वादश गुणाः, रूपम् = स्वरूपम् ,अन्यानि च = इतराणि च, अङ्गानि, "श्रेयांस्तु षड्विधस्त्यागः", "सत्यं ध्यानम्" चेति श्लोकद्वयेनोक्तानि, तथा बलं च = धर्माचरणसामर्थ्यं च, एतत् सर्वम् , आचार्ययोगे= गुरोः सान्निध्ये, एव, फलति = सिद्धं भवति। श्रूयते च-"आचार्याद् वै विद्या विदिता" इति। "आचार्यवान् पुरुषो वेद" इति च। ब्रह्मार्थयोगेन = ब्रह्मार्थः वेदार्थः-कर्म कर्मब्रह्मणो तयोर्योगः तेन अधिगमनेन, ब्रह्मचर्यं= ब्रह्माचरणम्, फलति = सफलं भवति। स्वात्मनः चित्सदानन्दाद्वितीय-ब्रह्मात्मैकत्वसम्पादनद्वारा लब्धं भवतीत्यर्थः।।१४।।

**चातकप्रिया हिन्दी**--पहले वर्णित ज्ञानादि द्वादश गुण जिसके रूप हैं तथा उसी के दूसरे अंग और बल-ये सभी तभी सफल होते हैं जब आचार्य (गुरु) का सान्निध्य प्राप्त हो जाय। ब्रह्मचर्य की पूर्णता ब्रह्मतत्त्व की प्राप्ति होने पर ही होती है।।१४।।

*इदानीं द्वाभ्यां ब्रह्मचर्यं स्तौति-*

**एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन्।**
**ऋषयश्च महाभागा ब्रह्मचर्येण चाभवन्।।१५।।**

**एतेनैव सगन्धर्वा रूपमप्सरसो जयन्।**
**एतेन ब्रह्मचर्येण सूर्य अह्नाय जायते।।१६।।**

**चातकप्रिया सं०व्या०**--देवाः = देवगणाः एतेनैव = ब्रह्मचर्येणैव, देवत्वं = सुरत्वम्, आप्नुवन् = लब्धवन्तः, महाभागाः च = भाग्यवन्तश्च, ऋषयः = ऋषिगणाः, ब्रह्मचर्येण, च = एव पूजनीयाः, अभवन्। **"ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत"**।।१५।।

एतेनैव = ब्रह्मचर्येणैव, सगन्धर्वाः = गन्धर्वैः सहिताः, अप्सरसः= उर्वश्यादयः, रूपं = दिव्यस्वरूपम्, अजयन् = प्राप्नुवन्, एतेनैव = ब्रह्मचर्येणैव, सूर्यः = भास्करः, अह्नाय = लोकानां द्योतनाय, जायते= सम्पद्यते। **"अह्नो दीप्तिश्च कथ्यते।"**।।१६।।

**चातकप्रिया हिन्दी**--देवताओं ने इस ब्रह्मचर्य के पालन से ही देवत्व प्राप्त किया और भाग्यशाली ऋषियों ने ब्रह्मचर्य की साधना से ही ब्रह्मत्व की प्राप्ति की। इसी ब्रह्मचर्य के प्रभाव से गन्धर्वों और अप्सराओं को रूप की प्राप्ति हुई है तथा सूर्यनारायण भी ब्रह्मचर्य के बल से ही जगत् को प्रकाशित करने में समर्थ हुए।।१५-१६।।

**आकांक्षार्थस्य संयोगाद्रसभेदार्थिनामिव।**
**एवं ह्येतत् समाज्ञाय तादृग्भावं गता इमे।।१७।।**

**अन्वयः**--रसभेदार्थिनाम् आकांक्षार्थस्य संयोगाद् इव, हि, एतत् समाज्ञाय, एवम् इमे तादृग्भावं गताः।।१७।।

**चातकप्रिया सं० व्या०**--अधुनैकस्यैव ब्रह्मचर्यस्य कथमनेकविधं फलसाधकत्वमिति दृष्टान्तदानेनोपपाद्यते। यथा चिन्तामणिरिति पारदगुटिकाविशेषः रसः, रसभेदार्थिनाम् = तं चिन्तितवस्तुप्रदम् अर्थयन्ते ये ते तेषाम्, विभिन्नरसाभिलाषिणाम्, आकांक्षार्थस्य = लिप्सितस्यार्थस्य, संयोगात्=संयोगः प्राप्तिः, ततः, भावानुकूलो भवति, एवमेव, एतत्= ब्रह्मचर्यम्, आकांक्षार्थस्य संयोगात् तत्तदाकांक्षितमर्थं प्रयच्छतीति

विज्ञाय, इमे = देवादयः, तत्तत्फलार्थं ब्रह्मचर्यं संसाध्य, तादृग्भावं = चिन्तितवस्तुप्रदत्वं, गताः = प्राप्ताः सत्यसङ्कल्पत्वादिति।। आचार्ययोनिं प्रविश्यैव गर्भो भूत्वा ब्रह्मचर्यमाचरेत्। आचार्यस्य सान्निध्यमधिगम्यैवानुष्ठिताद् ब्रह्मचर्यात् परमपुरुषार्थसिद्धिरित्यभिप्रायः।।१७।।

**चातकप्रिया हिन्दी व्या०**--केवल ब्रह्मचर्य मनुष्य--जीवन की सर्वश्रेष्ठ उपलब्धि है। जिस प्रकार विभिन्न रसों की आकांक्षा करने वालों को आकांक्षित विधि और विषयों के संयोग से तत् तत् रसरूप फल की प्राप्ति होती है, उसी प्रकार ब्रह्मचर्य अपने साधक को उसकी आकांक्षा के अनुरूप वस्तु प्रदान करता है। इसीलिए ब्रह्मचर्य के पालन से देवगण अपनी--अपनी आकांक्षा के अनुरूप अमरत्व आदि प्राप्त करने में सफल हुए। इस प्रकार यह सिद्ध हुआ कि एक ही ब्रह्मचर्य नानाविध फलों को दे देता है।।१७।।

**अन्तवन्तः क्षत्रिय ते जयन्ति**
**नानन्तं स्वात्मभूतं जयन्ति।**
**ज्ञानेन विद्वाँस्तेजअभ्येति नित्यं**
**न विद्यते ह्यन्यथा तस्य पन्थाः।।१८।।**

**अन्वयः**-क्षत्रिय ते अन्तवन्तः जयन्ति। स्वात्मभूतं अनन्तं न जयन्ति। विद्वान् ज्ञानेन नित्यं तेजः अभ्येति। हि तस्य अन्यथा पन्थाः न विद्यते।।१८।।

**चातकप्रिया सं० व्या०**--क्षत्रिय = राजन् !, ते = कर्मासक्ताः अविद्वांसः, अन्तवन्तः = पुण्यक्षये विनाशशीलान् स्वर्गादीन् लोकान्, जयन्ति = प्राप्नुवन्ति। "कर्मणा पितृलोकमिति" श्रुतेः। "प्लावा ह्येतेऽदृढा यज्ञरूपा" इति श्रुतेः। कर्मिणो यज्ञादिना अनन्तं = नित्यम्, स्वात्मभूतं = परमात्मभूतं लोकं सत्यादि, न जयन्ति = प्राप्नुवन्ति। कः पुनः प्राप्नोत्यनन्तलोकमुच्यते-

विद्वान् = ज्ञानी, ज्ञानेन = ब्रह्मविद्यया, नित्यं = शाश्वतम् स्वात्मभूतं, तेजः = परमात्मानम्, अभ्येति = प्राप्नोति। ज्ञानेनैव कस्मात्?-तस्य= पूर्णानन्दज्योतिषः, अन्यथा = ज्ञानादन्यः, मोक्षाय पन्थाः = मार्गः, न विद्यते= नास्ति। तथा च श्रुतिः-"नान्यः पन्था विद्यतेऽयनाये"ति।।१८।।

**चातकप्रिया हिन्दी**--हे राजन्! कर्म--सम्पादन में लगे हुए आत्मज्ञान से शून्य लोग कर्मार्जित पुण्य से स्वर्ग आदि लोकों को प्राप्त करते हैं, जो कि विनाशशील है। किन्तु विद्वान् ब्रह्मविद्या के द्वारा नित्य प्रकाशस्वरूप परमात्म पद को प्राप्त कर लेता है। चूँकि परमात्मा की प्राप्ति आत्मज्ञान के अतिरिक्त अन्य किसी साधन से नहीं होती, अतः विरक्त को चाहिए कि वह ब्रह्मचर्य के द्वारा ज्ञान ही प्राप्त करे, और कुछ नहीं। मनुष्य के लिए आत्म--लाभ से बड़ा कोई लाभ नहीं है।।१८।।

*धृतराष्ट्र उवाच-*

**आभाति शुक्लमिव लोहितामिवाथो**
**कृष्णमथार्जुनं काद्रवं वा।**
**यद् ब्राह्मणः पश्यति यत्र विद्वान्**
**कथं रूपं तदमृतमक्षरं परम्।।१९।।**

**अन्वयः**--विद्वान् ब्राह्मणः यत्र अमृतमक्षरं परमं पश्यति, तत् शुक्लं, लोहितं, कृष्णं, काद्रवं, आर्जुनं वा कथं रूपम् आभाति? इति प्रश्नः।।१९।।

**चातकप्रिया सं० व्या०**--धृतराष्ट्रः "नान्यः पंथा विद्यते अयनाय" इति संश्रुत्य "तूष्णींभूत उपासति न चेष्टेन्मनसापि च। उपावर्तस्व तद् ब्रह्म अन्तरात्मनि विश्रुतम्।।" इत्युक्तविधिना स्वात्मानमनुसंदधान-स्तमनवाप्य नानावर्णान्नाडीमार्गादन्तर्हृदि पश्यन् प्रश्नाति आभातीति। विद्वान् ब्राह्मणः = ब्रह्मनिष्ठो ज्ञानी, यत्र = यस्यां बुद्धिगुहायां हृदये

वा, ब्रह्मणो यत् अमृतं = अविनाशि, अक्षरम् = व्यापकम्, परं= तत्त्वभूतं स्थितं, रूपं पश्यति, तत् रूपं कथं = कीदृशम् ? तत् किं शुक्लं = शुभ्रवर्णम्, लोहितम् = रक्तवर्णम्, कृष्णम् = श्यामवर्णम्, आर्जुनमिव = अर्जुनवृक्षवर्णमिव कषायम्, काद्रवम् = कुत्सितः परपीडकः द्रवो गतिर्यस्य स काद्रवो धूमः तद्वर्णम्, अथवा कद्रु पिङ्गलं तद्वर्णम् इव। श्रूयन्ते च ब्रह्ममार्गे रूपाणि-"तस्मिन् शुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च, एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैज सश्च" इति।।१९।।

चातकप्रिया हिन्दी--धृतराष्ट्र ने पूछा-भगवन् ! ज्ञानी पुरुष अपने ज्ञान के द्वारा हृदय में जिस अविनाशी, सर्वव्यापक, सर्वश्रेष्ठ परमात्म तत्त्व का साक्षात्कार कर लेता है, उस परमात्म तत्त्व का रंग कैसा है? क्या वह श्वेत है, लाल है, काला है, कषाय है अथवा पीत वर्ण का है? कैसा प्रकाश दिखलायी पड़ता है, आप कृपापूर्वक बतलावें।।१९।।

*सनत्सुजात उवाच-*

**नाभाति शुक्लमिव लोहितमिवाथो**
**कृष्णमथार्जुनं काद्रवं वा।**
**न पृथिव्यां तिष्ठति नान्तरिक्षे**
**नैतत्समुद्रे सलिलं विभर्ति।।२०।।**

अन्वयः--शुक्लमिव लोहितमिव अथ कृष्णमिव अथ आर्जुनमिव काद्रवं वा न आभाति। न पृथिव्यां न अन्तरिक्षे तिष्ठति, समुद्रे सलिलम् एतत् न विभर्ति।।२०।।

चातकप्रिया सं० व्या०--सनत्सुजात उत्तरमाह--यद्यपि ब्रह्ममार्गे शुक्लादिरूपाणि भांति तथाप्येतद् ब्रह्म शुक्लादिरूपत्वेन नावभासते, ब्रह्मणोऽरूपत्वात्। ब्रह्मणो रूपं पृथिव्यादिष्वपि नास्ति। तथा च श्रुतिः-

**"ततो यदुत्तरतरं तद्रूपमनामयम्"** इति। **"अशब्दमस्पर्शमरूपमव्ययम्"** इति च। तथाऽरसं नित्यमगन्धवच्च यत् इति। एतद् ब्रह्म अन्तरिक्षेऽपि न तिष्ठति। तदवस्थानं त्वन्यत्रैव। तथा च श्रुतिः-**"स भगवः कस्मिन् प्रतिष्ठितः इति स्वे महिम्नीति"**। एतद् ब्रह्म समुद्रे = भवसागरे, सलिलं = सलिलोपलक्षितं पञ्चभूतात्मकं देहं न विभर्ति। जीवानामिवो नास्ति ब्रह्मणोऽप्युपाधिजं दुःखमित्याशयः। सागरजले नास्त्येवैतद् रूपम्। यथा--**आप एव ससर्जादौ तासु बीजमवासृजत्।** एवमेव श्रूयते पंचाग्निविद्यायाम् **"पंचम्यामाहुतावापः पुरुषवचसो भवन्ति"** इत्यपामेव पुरुषशब्दार्थः। तथा च श्रुतिरन्यापि-**"नीहारधूमार्कानिलोऽनलानां खद्योताविद्युत्स्फटिकशशीनाम्। एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे।** इति। अतश्च ब्रह्मप्रकाशः आत्मप्रकाशो वा श्वेतादिरूपेण नावभासते। स तु विलक्षण एवानिर्वचनीयः।।२०।।

**चातकप्रिया हिन्दी**--सनत्सुजात ने कहा--हे राजन् ! वह आत्मप्रकाश (ब्रह्मप्रकाश) शुक्ल, लोहित, कृष्ण, पीत आदि--किसी भी रंग में प्रतीत नहीं होता। ब्रह्मरूप का आधार पृथ्वी भी नहीं है और न अन्तरिक्ष ही। उसे सागर--सलिल भी धारण नहीं करता। वह अरूप है। सर्वथा विलक्षण और अनिर्वचनीय है।।२०।।

*तर्हि न कस्य कुत्राप्युपलभ्यते इत्याह*--

**न तारकासु न च विद्युदाश्रितं**
**न चाभ्रेषु दृश्यते रूपमस्य।**
**न चापि वायौ न च देवतासु**
**नैतच्चन्द्रे दृश्यते नोत सूर्ये।।२१।।**
**नैवर्क्षु तन्न यजुःषु नाप्यथर्वसु**
**न दृश्यते वै विमलेषु सामसु।**

रथन्तरे वार्हते वापि राजन्
महाव्रतस्यात्मनि दृश्यते तत्।।२२।।

**चातकप्रिया सं० व्या०**--अस्य ब्रह्मणो रूपं तारकासु = नक्षत्रेषु, न = नास्ति, इदं ब्रह्मणो रूपं विद्युदाश्रितं नास्ति। एवमेव अभ्रेषु= घनेषु, वायौ = पवने, देवतासु = देवेषु, चन्द्रे, सूर्ये चापि न दृश्यते ब्रह्मणः स्वरूपम् । यतो हि तत्र तत्र यज्ज्योतिः तदवभासकः परामात्मैवास्ति। यथोक्तं भगवता वासुदेवेन गीतायाम् -

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्।
ज्योतिषामपि यज्ज्योतिस्तमसः परमुच्यते।।इति च।।

ननु वेदे तूपलभ्यते। तदपि निवारयति-नैवर्क्षु इति। तत् = परमात्मतत्त्वम्, ऋक्षु = ऋग्वेदेषु, यजुःषु, अथर्वसु विमलेषु च सामस्वपि न दृश्यते। जडत्वात् तेषां व्यापकस्य परिच्छिन्नत्वाभावात्। रथन्तरे= एतन्नामके साममन्त्रे, वार्हते = वृहतः इदं वार्हतं तस्मिन् वृहद्रथनामके साममन्त्रेऽपि न दृश्यते। ब्राह्मणवशिष्ठन्यायेन पृथगुक्तिः। क्व तर्हि कस्योपलभ्यते इत्यत आह--महाव्रतस्येति। ज्ञानं च सत्यञ्चेत्यादिना द्वादश महाव्रता ब्राह्मणस्य कथिताः। तेऽस्य सन्तीति महाव्रती ब्राह्मणः। तस्य= धृतद्वादशमहाव्रतस्य ब्राह्मणस्य, आत्मनि = अन्तःकरणे, तत् = ब्रह्म, दृश्यते = उपलभ्यते-आत्मतयेति। यथोक्तं-

एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते।
दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः।।

स्मृतावप्युक्तम् -"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।" एवं निष्कर्षोऽयमुदेति यद् महाव्रतेन ब्राह्मणेन स्वात्मन्येवात्मना तद् ब्रह्मोपलभ्यते इति।।२२।।

**चातकप्रिया हिन्दी**--सनत्सुजात ने कहा-हे राजन् ! यह ब्रह्म न

नक्षत्रों में है और न ही विद्युत् में। उसका रूप बादलों में भी नहीं दिखता। वायु में, चन्द्र में, सूर्य में और देवताओं में भी वह नहीं दिखलायी पड़ता।।२१।।

इसी प्रकार यह ब्रह्म न ऋग्वेद में, न यजुर्वेद में, न अथर्व में और न तो विमल सामवेद में ही दिखाई देता है। रथन्तर और वृहत् नामक सामवेद में भी यह प्राप्त नहीं होता। राजन् ! इसका साक्षात्कार द्वादश महाव्रतधारी ब्राह्मण अपने अन्तःकरण में करता है।।२२।।

*साम्प्रतं तत्स्वरूपं तद्दर्शनं तत्फलञ्च द्वाभ्यां निर्दिशति-*

**अवारणीयं तमसः परस्तात्**
**तदन्ततोऽभ्येति विनाशकाले।**
**अणीयरूपं च तथाप्यणीयसां**
**महत्स्वरूपं त्वपि पर्वतेभ्यः।।२३।।**
**तदेतदह्ना संस्थितं भाति सर्वं**
**तदात्मवित् पश्यति ज्ञानयोगात्।**
**तस्मिन् जगत् सर्वमिदं प्रतिष्ठितं**
**य एतद् विदुरमृतास्ते भवन्ति।।२४।।**

*।।इति तृतीयोऽध्यायः।।*

**चानर्कप्रिया सं०व्या०**--तमसः=अज्ञानान्धकारात्, परस्तात्=पराचीनम्, तद् = महाव्रतस्यात्मनि दृश्यमानं ब्रह्म, अवारणीयं = अनतिक्रमणीयम्, अद्वयत्वात् , अपि = वरञ्च, अन्ततः= जगतः विनाशकाले, विनाशकाले = प्रलये, अभ्येति = अधिगच्छति। जगत् ब्रह्मण्येव लीयत इति भावः। इदं च ब्रह्म अणीयसामपि= सूक्ष्माणामपि, अणीयरूपं = सूक्ष्मरूपम्, अपि च पर्वतेभ्यः = गिरिभ्योऽपि, महत्स्वरूपं= वृहत्स्वरूपम्, अस्तीति। श्रूयते च "**अणोरणीयान् महतो महीयान्**" इति।।२३।।

एतत् सर्वम् = अणुत्वमहत्वादि सर्वं जगत्, अह्ना = प्रकाशरूपेण ब्रह्मणि, संस्थितं = वर्तमानं सत्, भाति = प्रकाशते-तदात्मत्वेनैवेति। तथा च श्रुतिः-"तस्य भासा सर्वमिदं विभाति"। "येन सूर्यः तपति तेजसेद्धः" इति च। आत्मवित् = आत्मज्ञानी, ज्ञानयोगात् =ज्ञानेन ब्रह्मविद्यया, नहि कर्मयोगेन, तत्= ब्रह्म, पश्यति = अनुभवति, इदं सर्वं जगत्, तस्मिन् = ब्रह्मण्येव, प्रतिष्ठितम् = संस्थितम्, ये = आत्मज्ञानिनः, एतद् = जगदधिष्ठितं ब्रह्म, विदुः = जानन्ति, ते अमृताः= मुक्ताः, भवन्ति।।२४।।

*।।इति यमुनेशत्रिपाठिना चातकेन कृतायां सनत्सुजातीयदर्शनस्य चातकप्रियाख्यायां संस्कृतव्याख्यायां तृतीयोऽध्यायः।।*

चातकप्रिया हिन्दी--यह ब्रह्म अज्ञानान्धकार से परे अविच्छिन्न है। इसकी स्थिति प्रलय में भी रहती है। यह सूक्ष्म से भी सूक्ष्म और पर्वतों से भी विस्तृत-विशाल है। यह सम्पूर्ण जगत् उसी ब्रह्म में स्थित और उसी से प्रभासित है। आत्मज्ञानी अपने हृदय में ज्ञानयोग के द्वारा इसका साक्षात्कार करते हैं। जो इस ब्रह्म को जान लेता है, वह मुक्त हो जाता है।।२४।।

*।।सनत्सुजातीय दर्शन की "चातकप्रिया" हिन्दी व्याख्या का तीसरा अध्याय समाप्त।।*

□

# अथ चतुर्थोऽध्यायः

इतः प्रागध्याये ब्रह्मचर्यस्य महत्त्वं वर्णितम्। ब्रह्मचर्याचरणेन लब्धायां ब्रह्मविद्याया ब्रह्मणश्च स्वरूपमुक्तम्। ब्रह्म कुत्र लभ्यते, निर्दिष्टम्। अत्राप्यध्याये परमात्मन एव स्वरूपं योगिगम्यमुच्यते। तत्रैव ब्रह्मज्ञानस्य फलं, जीवस्यापि ब्रह्मरूपत्वमित्यादिविषया अपि सन्ति प्रतिपादिताः।

*सनत्सुजात उवाच-*

**यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः।**
**यद्वै देवा उपासते यस्मादर्को विराजते।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।१।।**

**चातकप्रिया सं०व्या०**---ज्ञानयोगात् पश्यति यद् ब्रह्मविद् यच्चं विज्ञाय विज्ञा अमृता भवन्ति, तद् ब्रह्म शुक्रं = अविद्यादिदोषरहितं शुद्धम्। अविद्या ब्रह्मण्यध्यस्ता भवति। अध्यस्यमानेन च वस्तुना सह अधिष्ठानस्य लवोऽपि न दृश्यते संश्लेषः। अतः तद् ब्रह्म सर्वदोषविवर्जितं सर्वथा शुद्धम्। महज्ज्योतिः = सर्वावभासकत्वात् महत्प्रकाशम्। श्रूयतेऽपि- "तस्य भासा सर्वमिदं विभाति"। दीप्यमानं = सूर्यचन्द्रादिरूपेण भ्राजमानम्। महद्यशः महद्यशोऽभिधानम् अस्ति। यथा प्रसिद्धम् -"तस्य नाम महद्यशः।" यत् = ब्रह्म, देवा = इन्द्रादयः इन्द्रियाधिष्ठातृदेवताः, उपासते= अनुसरन्ति-स्वशक्त्यर्थे, यस्मात् = ब्रह्मणो जगन्मूलकारणात्; अर्कः= जगत्प्रसवधर्मा सूर्यः मायोपाधिकः सन् विराजते = शोभते। तथा च श्रुतयः-"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रत्यभिसंविशन्तीति। को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्। येन सूर्यस्तपतिं तेजसेद्धः। न तस्येशे कश्चन तस्य नाम महद्यशः। न प्राणेन नापानेन मर्त्यो जीवति कश्चन।इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ। प्राणस्य प्राणमुत चक्षुषश्चक्षुः इत्यादयः।

योगिनः = निरुद्धचित्तवृत्तयः, तं = सनातनं; भगवन्तं = सकलैश्वर्ययुतम्, पश्यन्ति = समाधावनुभवन्ति। परमात्मा योगं विहाय नान्येन केनचिद् बाह्यसाधनेन द्रष्टुं शक्य इति भावः। यथोक्तं दक्षस्मृतौ-

स्वसंवेद्यं हि तद् ब्रह्म कुमारी--स्त्री--सुखं यथा।
अयोगी नैव ज़ानाति जात्यन्धो हि यथा घटम्।।१।।

चातकप्रिया हिन्दी--श्री सनत्सुजात ने उस विशुद्ध अखण्डैकरस ब्रह्म के विषय में कहा-वह विशुद्ध ब्रह्म महान् ज्योतिर्मय (सबका प्रकाशक) सर्वदा दीप्यमान तथा महान् यशस्वरूप है। समस्त इन्द्रियाधिष्ठातृ देवता उसी की उपासना करते हैं। सूर्य उसी से प्रकाशित होता है। योगी चित्तवृत्तियों के निरोध के द्वारा समाधिस्थ होकर अपने हृदय में उसी परमात्मा का साक्षात्कार करते हैं। वह पर-ब्रह्म परमात्मा योग के अतिरिक्त और किसी बाहरी साधन से नहीं पाया जा सकता।।१।।

*इदानीं परस्मादेव ब्रह्मणो हिरण्यगर्भाद्युत्पद्यत इति दर्शयति-*

शुक्राद् ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्द्धते।
तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम्।।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।२।।

चातकप्रिया सं० व्या०--प्रागुक्तस्यैव मन्त्रस्यार्थाः प्रस्तार्यते--शुक्रादिति। शुक्रात् = विशुद्धब्रह्मणः, ब्रह्म = हिरण्यगर्भनामकं ब्रह्म, प्रभवति= जायते। पुनः तदुत्पन्नं ब्रह्म, शुक्रेणैव =विराडात्मना,वर्द्धते=वृद्धिं प्राप्नोति। तत् शुक्रं ज्योतिषां = सूर्यादीनाम्,मध्ये=अन्तःस्थित्वा, अतप्तं= अप्रकाशितं सत्, तपति = स्वयं प्रकाशते, तेषामपि चादित्यादीनां प्रकाशकं विशुद्धं ब्रह्मैव अथवा तापनं = भयकारकम्। यथोक्तं गीतायाम् -

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्।।

श्रुतिश्चेत्थम् -"भीषाऽस्माद्वातः पवते भीषादेति सूर्यः। भीषाऽस्मादग्निश्च मृत्युर्धावति पञ्चमः।।२।।

चातकप्रिया हिन्दी--उस विशुद्ध ब्रह्म से हिरण्यगर्भ नामक (माया-विशिष्ट) ब्रह्म की उत्पत्ति होती है तथा उसी शुद्ध ब्रह्म से हिरण्यगर्भ बढ़ता है। "यस्मात् शरीरी प्रथमः"। उस विशुद्ध प्रकाशमय ब्रह्म से ही सूर्य आदि प्रकाशित होते हैं। उसी ब्रह्म का सभी को भय रहता है। योगीजन उसी स्वप्रकाश शुद्ध सनातन ब्रह्म का अपनी आत्मा में साक्षात् दर्शन करते हैं।।२।।

*इदानीं पूर्णवाक्यार्थं कथयति-*

> पूर्णात्पूर्णमुद्धरन्ति पूर्णात्पूर्णं प्रचक्षते।
> हरन्ति पूर्णात्पूर्णं च पूर्णेनैवावशिष्यते।।
> योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।३।।
> यथाऽऽकाशेऽवकाशोऽस्ति गंगायां वीचयो यथा।
> तद्वच्चराचरं सर्वं ब्रह्मण्युत्पद्य लीयते।
> योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।४।।

चातकप्रिया सं० व्या०--पूर्णात् = देशतः कालतः वस्तुतश्च अपरिच्छिन्नात् शुद्धब्रह्मणः, पूर्णम् = जीवाख्यं तदंशभूतं ब्रह्म, उद्धरन्ति =पृथक्कुर्वन्ति। अतः पूर्णादेव समुद्धृतत्वात् इदं जीवस्वरूपमपि पूर्णमिति विद्वांसः प्रचक्षते। जीवाः प्राणादय उपाधिदर्पणाः। अतः उपाधीनां पृथक्सत्वे सति पूर्णस्य पूर्णत्वमेव व्याहतं स्यात् इत्याशङ्कायामाह-पूर्णात् पूर्णं प्रचक्षत इति। इदं तात्पर्यम् -घटाकाशन्यायेन उपाध्युपाधेययोः परस्परपरिच्छेदकत्वेऽन्यतरस्यापि पूर्णत्वं न युज्यते। अतः उपाधिरप्यध्यस्त एव। तथा चाधिष्ठानाध्यस्तयोर्विषमसत्ताकत्वान्न परस्परपरिच्छेदकत्वं किन्त्वितरेतरतिरोधायकत्वमेवास्तीति स्वस्वप्रतीतिकाले द्वयोरपि पूर्णत्वम्, प्रतियोगिनस्तदानीमदर्शनात्। उपाधिजीवेश्वरभेदे कल्पितो हेतुरिति।

पूर्णात् = जीवात्मनावस्थितात्, पूर्णम् = आत्मस्वरूपमात्रम् देहेन्द्रियाद्यनुप्रविष्टं देहेन्द्रियादिभ्यः निष्कृष्य तत्साक्षि भूतं देहद्वयादुद्धरन्ति। ततः पूर्णेन = मूलभूतेन पूर्णानन्देन, अवशिष्यते = संयुज्यते। मृते सति शरीरे पूर्णमेव ब्रह्मावशिष्यते। तथा च श्रुतिः-"पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।" जीवेश्वरयोर्भेदोऽज्ञानमूलक इत्युक्तं विष्णुपुराणेऽपि-"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणा भेदमसन्तं कः करिष्यति।।" अयं च भावः-पूर्णमदः = तत् शब्दवाच्यं जगन्मूलं ब्रह्म। पूर्णमिदम् त्वं शब्दवाच्याद्भिन्ननिर्दिष्टं प्रत्यगात्मस्वरूपम्। कथं तत्त्वम्पदार्थयोः पूर्णत्वमिति चेदाह-पूर्णादनवच्छिन्नात् पूर्णमेवोदच्यते-जीवेश्वररूपेण। तस्मादनयोः पूर्णत्वम्। शोधितपदार्थः पूर्णमेव ब्रह्म अवशिष्यते। तं च पूर्णं परमात्मानं योगिनः पश्यन्ति, न कुयोगिन इति।।३।।

यथा आकाशे = नभसि, अवकाशः = अन्तरालम्, गङ्गायां च, वीचयः= लहर्यः, सन्ति, तद्वत् = तेनैव प्रकारेण, सर्वम् = सम्पूर्णम्, चराचरम्= जड़जङ्गमात्मकं जगत्, ब्रह्मणि = कारणे शुद्धब्रह्मणि, उत्पद्य = प्रजाय, लीयते = लीनं भवति। योगिनः तं सनातनं शुद्धं भगवन्तं प्रपश्यन्ति।।४।।

**चातकप्रिया हिन्दी**--पूर्ण ब्रह्म से जो जीव उत्पन्न होता है, वह भी उसका अंश होने से पूर्ण ही होता है। पुनः अन्त समय में उस पूर्ण जीव से शुद्ध ब्रह्मस्वरूप पूर्ण को अलग कर लिया जाता है। इस प्रकार जो शेष रहता है, वह भी पूर्ण ब्रह्म का ही अंश होता है। ऐसे शाश्वत् ब्रह्म का दर्शन योगीजन अपनी आत्मा में करते हैं।।३।।

जैसे आकाश में अवकाश होता है तथा गङ्गा में तरङ्गें होती हैं--और निरन्तर उसी में उत्पन्न तथा लीन होती रहती हैं, उसी प्रकार यह समग्र चराचर जगत् ब्रह्म में ही उत्पन्न होकर पुनः

उसी में लीन हो जाता है। उस सनातन ब्रह्म का साक्षात्कार योगी करते हैं।।४।।

आपोऽथादभ्यः सलिलं तस्य मध्ये
उभौ देवौ शिश्रियातेऽन्तरिक्षे।
आदध्रीचीः सविषूचीर्वसानौ
उभौ विभर्त्ति पृथिवीं दिवञ्च।।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।५।।

**चातकप्रिया सं० व्या०**-तस्मात् = शुक्रस्वरूपात् परमात्मनः, आपः= पञ्चभूतानां सृष्टिर्जाता, तथा चाह मनुः-"आप एव ससर्जादौ" इति। इयञ्च सूक्ष्मसृष्टिरुक्ता। अथ = तदनन्तरम्, अद्भ्यः = क्षित्यादि-पञ्चमहाभूतेभ्यः, सलिलम् = पञ्चप्रपञ्चात्मकं स्थूलं देहादिकं सृष्टम्। तस्य सलिलस्य = देहादिकस्य, मध्येऽन्तरिक्षे = हृदयाकाशे, उभौ= द्वौ जीवपरमात्मानौ, देवौ = द्योतनस्वभावौ, शिश्रियाते = वर्तेते। तथा च आदध्रीचीः = आभिमुख्येन ध्रियमाणा अवस्थिताः ताः "अंचंति" इत्यादध्रीच्यो दिशः, विषूच्यः = विष्वग्गमनशीला उपदिशः, ताभिः सह वर्तन्त इति सविषूच्यः प्राच्याद्याः सर्वा दिशः, वसानौ= पटवदाच्छादयन्तौ दिगन्तं यावद् विस्तृतौ, पृथिवीं = धरित्रीं, दिवं= आकाशं, च विभर्त्ति = धारयतः । अयंभावः-एक एव जीवः स्वाभाविक-चित्सदानन्दाद्वितीयब्रह्मात्मत्वमविज्ञाय अनात्मनि च देहादौ भौतिकवस्तुनि आत्मभावमापन्नः भूतभौतिकस्वरूपं कर्मफलानुरूपं सुखदुःखात्मकं देहादिकं पृथिवीति संज्ञकं बिभर्ति। अपरश्च दिवपदोक्तं द्योतनात्मकं स्वात्मरूपं धारयति। "द्वा सुपर्णाविति" श्रुतिः। एवं यः स्वात्मानं स्वमायया प्राणाद्यनन्तरं विधाय तदनुप्रविश्याभिपश्यन्नास्ते तं परमात्मानं योगिन एव पश्यन्ति।।५।।

**चातकप्रिया हिन्दी**--सृष्टिक्रम में सर्वप्रथम "आप् " सूक्ष्मभूत उत्पन्न

हुआ। पुनः उससे "सलिल" स्थूल पंचमहाभूत पैदा हुआ। देहात्मभाव से स्थित उस सलिल के मध्य अर्थात् प्राणियों के हृदय में जीवात्मा और परमात्मा--दोनों विद्यमान रहते हैं। ये दोनों द्युलोक (देवतत्त्व) और पृथ्वी (भौतिक तत्त्वों का) पोषण करते हैं। इस प्रकार हृदयस्थ उस परमात्मा का साक्षात्कार योगीजन करते हैं।।५।।

*इदानीं ज्ञानिनः स्वात्मन्यवस्थानं दर्शयति--*

**चक्रे रथस्य तिष्ठन्तं ध्रुवस्याव्ययकर्मणः।**
**केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि।।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।६।।**

**चातकप्रिया सं० व्या०**--रथस्य = शरीरस्य, रथः स्यन्दनयोरिति विश्वः। कीदृशस्य रथस्य-ध्रुवस्य= कूटस्थस्य प्रारब्धकर्मसमाप्तिं यावत् स्थितस्य नित्यस्य, अव्ययकर्मणः = अव्ययं अविनाशि कर्म यस्य तत् तस्य तादृशस्य देहस्य, चक्रे = चक्रवच्चालके प्राक्कर्मणि निमित्ते सति, शरीरस्य मध्ये हृदये वा, तिष्ठन्तं = अवस्थितम्, केतुमन्तं = प्रज्ञा ब्रह्मविद्या सैव केतुः, प्रज्ञावन्तं, दिव्यम् = अप्राकृतम्, अजरं = जरामरणरहितम्, तं = ज्ञानिनं पुरुषं, आत्मानं वा, अश्वाः = इन्द्रियाणि, दिवि = द्योतनात्मके पूर्णानन्दे ब्रह्मणि, वहन्ति = प्रापयन्ति। अयमाशयः- पुरुषस्येन्द्रियाणि यद्यपि स्वभावत एव विषयान् प्रति धावन्ति तथापि विज्ञानसारथिना समाकृष्यमाणानि तानि प्रज्ञावन्तं पुरुषं जीवात्मानं परमात्मानं प्रापयन्तीति। उक्तञ्चैतद्रहस्यं कठोपनिषदि-

"आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च।।
इन्द्रियाणि हयानाहुः विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः।।"

तं परमात्मानं योगिनः एव साक्षात्कुर्वन्ति।।६।।

चातकप्रिया हिन्दी--नित्य तथा अविनाशी कर्म वाले शरीररूपी रथ के मध्य (हृदय) में विराजमान ज्ञानवान् जीवात्मा को उसकी जागरूक ज्ञानेन्द्रियाँ विषयों से हटाकर परमात्मा तक ले जाती हैं। योगीजन उसी परमात्मा को अपने हृदय में देखते हैं।।६।।

*नानेन सदृशं किञ्चिद् विद्यत इत्याह-*

न सादृश्ये तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चिदेनम्।
मनीषयाथो मनसा हृदा च
य एनं विदुरमृतास्ते भवन्ति।।
योगिनस्तं प्रपश्यान्ति भगवन्तं सनातनम्।।७।।

चातकप्रिया सं० व्या०--अस्य = परब्रह्मणः, रूपम् = आकारः, सादृश्ये = उपायाम्, न तिष्ठति = वर्तते। परमात्मानुपमस्वरूपः। नान्येन सदृशोऽयं न वानेन सदृशमन्यत् किमपीत्याशयः। श्रूयते च-"न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः।" तथा च कश्चित् = सांसारिकः पुरुषः, एनं = परमात्मानम्, चक्षुषा = नेत्रादीन्द्रियसमूहेन, न पश्यति। कथं तर्हि पश्यति? मनीषया = अध्यवसायात्मिकया बुद्ध्या, मनसा= संकल्पविकल्पात्मकेन मनसा, हृदा च = हृदयेन, परमात्मना वा। परमात्मा केवलेन मनसा बुद्ध्या वा न प्राप्यते। स तु हृदयस्थेन परमात्मनानुगृहीतेन ज्ञानिना मनोऽबुध्या लभ्यते। एवं ये परमात्मानं जानन्ति ते अमृताः अमरधर्माणो भवन्ति। "हृत्" शब्दो हृदयस्थे परमात्मनि निरुक्तो यथा-"स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयमिति अहरहर्वा एवंवित्स्वर्गलोकमेति" इति हृदाद्यधीनात्मसिद्धिर्यथा-"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता अर्थाः प्रकाशन्ते महात्मनः।"इति।।७।।

चातकप्रिया हिन्दी--इस परमात्मा के रूप की किसी से तुलना

नहीं हो सकती। यह अनुपमेय है। इसके दर्शन चर्मचक्षुओं से नहीं हो सकते। इसे तो हृदयस्थ ईश्वर की कृपा से मन और बुद्धि के द्वारा हृदय में ही पाया जाता है। जो इस परमात्मा को जान लेते हैं, वे अमर हो जाते हैं। उस सनातन परमात्मा को योगी देखते हैं।।७।।

*इन्द्रियाणां विषयप्रवृत्तिरनर्थायेति कथयति-*

**द्वादशपूगाः सरितो देवरक्षिता मध्वीशते।**
**तदनु विधायिनस्तदा संचरन्ति घोरम्।।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।८।।**

**चातकप्रिया सं० व्या०**--द्वादशपूगाः = पूगाः समुदायाः द्वादश - संख्याः पूगाः यस्यां सा ताम्। पूगाश्चैते-

चित्तादिपूगः स्मरणादिपूगः श्रोत्रादिपूगः श्रवणादिपूगः।
वागादिपूगो वचनादिपूगः शब्दादिपूगो विषयादिपूगः।।१।।
प्राणादिपूगः श्वसनादिपूगः संस्कारपूगः सुकृतादिपूगः।
एतैर्भवापूगवरैरविद्यानद्यामधश्चोपरि चैति जीवः।।२।।

द्वादशपूगाश्चेत्थमपि-पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणिं, एकादशं मनः द्वादशी च बुद्धिः। एतानि सरितः = सरणशीलाः नित्यप्रवाहवन्ति, देवरक्षिताः = देवेन रक्षिताः, मधु = मधुरं विषयं, ईशते = नियमयैति, पृथक् पृथक् स्वं स्वं विषयमनुभवन्ति। अनुभवसमनन्तरमेव विषयपराः, घोरम् = संसारम् , संचरन्ति = पुनः पुनः आवर्तन्ते। अविद्यानद्याः पशुपुत्रादिकमेव मधुरं फलम्, तदेवेक्षन्तो जीवाः संसारं संचरन्ति। अतः इन्द्रियाणि विषयेभ्यः समाकृष्य स्वात्मन्येव वशं नयेत् । येन च रक्षिता पूगा मधु वाञ्छन्ति तं परमात्मानं योगिन एव पश्यन्ति।।८।।

**चातकप्रिया हिन्दी**--देवताओं से रक्षित, पाँच ज्ञानेन्द्रियाँ, पाँच कर्मेन्द्रियाँ, ग्यारहवाँ मन और बारहवीं बुद्धि - ये बारह संसरणशील-नित्य

प्रवहमान-इन्द्रियसमूह हैं। वे अपने-अपने विषयरूपी मधु का ग्रहण करते हैं। इन्द्रियों के पीछे भागने वाले बार-बार संसार में आते-जाते रहते हैं। इन्द्रियसमूह (पूग) जिससे रक्षित होकर विषयों का सेवन करते हैं, उस परमात्मा को योगीजन ही देख पाते हैं।।८।।

*किंच दृष्टान्तदार्ष्टान्तिकयोस्तत्राभिधानम् -*

**तदर्धमासं पिबति संचितं भ्रमरो मधु।**
**ईशानः सर्वभूतेषु हविर्भूतमकल्पयत्।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।९।।**

**चातकप्रिया सं० व्या०**--यथा = येन प्रकारेण, भ्रमरः = भ्रमणशीलः विषयाभिलाषी मधुकरः, अर्द्धमासं = अर्द्धमासश्चन्द्रो यस्मिन् भोग्यत्वेन तत् अर्द्धमासं भवति। अर्द्धमासोपार्जितमित्याशयः। संचितं = उपार्जितम्, मधु = कर्मफलं, पुष्परसं, अर्द्धमासं = अपरं पक्षं यावत्, पिबति, तथा = तद्वत्, असौ नानायोनिषु भ्रमणशीलो जीवात्मापि पूर्वजन्मसंचितं कर्म अन्यस्मिन् जन्मनि भुङ्क्ते। कर्मफलं तु भुक्त्वैव जीवो विश्रामं लभते। तथाहि-"तेषां सोमो राजान्नं तं देवा भक्षयन्तीति" इतः गत्वा जीवो देवत्वं प्राप्तः इष्टाधिकारी सोमस्थममृतं पिबति। इतः गत्वा जीवोऽयं स्वकर्मणः फलं भङ्क्ते शेषेण चास्मिन्नेव लोके पुनरावर्तते। संचितमित्यनेन सूचितं भवति यज्जीवे आमुष्मिकफलभोगानन्तर-मैहिकफलभोगभावनापि विद्यते। आमुष्मिकं फलं भुक्त्वा ऐहिकफलभोगार्थमवतरति पुनर्जीवः। कर्मणां विनाशित्वात् कथं तेषां फलभोगोऽन्यस्मिन् जन्मनि? उच्यते-ईशानः = अन्तर्यामी परमात्मा, अथवा जीव एव ईशानः, सर्वभूतेषु = सर्वप्राणिषु तिष्ठति। स एव हविर्भूतं=हविर्भिः भूतं सिद्धं अन्नादिकं भोग्यं कल्पितवान्। ईशान एव वेदस्य वेदोक्तमार्गस्य च प्रवर्तक इत्यभिप्रायः। एतादृशं हविभूत-कल्पकमीशानं जीवात्मानं परमात्मानं वा योगिनः पश्यन्ति।।९।।

**चातकप्रिया हिन्दी**--जैसे भ्रमर अपने द्वारा पन्द्रह दिनों (एक पक्ष) में संचित मधु को शेष पन्द्रह दिनों में स्वयं पीता है वैसे ही यह नाना योनियों में भ्रमण करने वाला जीव अपने पूर्वजन्मार्जित कर्मफल को इस जन्म में भोगता है। सर्वान्तर्यामी परमात्मा ने समस्त प्राणियों के लिए उनके कर्मानुसार अन्न आदि फलभोगरूपी हवि की व्यवस्था की है। अर्थात् हमें जो भी अन्न, वस्त्र आदि भोग्य पदार्थ मिलता है, वह सब कर्म के अनुसार फलरूप में ही मिलता है।।९।।

***भ्रमणशीला जीवा ज्ञानं लब्ध्वा मुच्यन्ते न वेति-***

**हिरण्यपर्णमश्वत्थमभिपत्य ह्यपक्षकाः।**
**तत्र ते पक्षिणो भूत्वा प्रपतन्ति यथा सुखम्।।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।१०।।**

**चातकप्रिया सं० व्या०**-अपक्षकाः = न सन्ति पक्षाः उत्क्रमणहेतव उपाधयः प्राणरूपा येषां ते चिदात्मानः तत्र अविद्यायां पक्षिणो भूत्वा प्राणाद्युपाधिमवाप्य उत्क्रमणयोग्या भूत्वा ज्ञानपक्षहीनाः सन्तः, हिरण्यपर्णं = हिरण्यानि हरणशीलानि आपातरमणीयत्वात् पर्णानीव अवयवाः स्त्रीपुत्रादयो यस्य सः तं हिरण्यपर्णम्, अश्वत्थम् = न श्वोऽपि तिष्ठतीत्यश्वत्थो नश्वरोऽविद्यावृक्षः तम्, अभिपत्य = अभिपद्य, यथासुखम् = यथावासनम्, तत्र = तासु-तासु योनिषु, प्रपतन्ति। अपरश्चार्थः-हिरण्यवर्णमश्वत्थम् = वेदसंयोगिब्राह्मणादिदेहम्, अभिपत्य = आरुह्य, तत्रैव = ब्राह्मणादिदेहे एव, पक्षिणः = ज्ञानिनः, भूत्वा =यथेच्छं प्रयत्नं कृत्वा, प्रपतन्ति = मुक्ता भवन्ति। अश्वत्थवृक्षविषये गीतायामुक्तम्-

**"अश्वत्थमेनं सुविरूढमूलमिति"।** श्रुतिः समर्थयति-

**"ये वै विद्वांसस्ते पक्षिणो ये अविद्वांसस्ते अपक्षाः।"।।१०।।**

**चातकप्रिया हिन्दी**--अज्ञानी ज्ञान पक्ष से हीन होने के कारण सकाम भाव से कर्म करते हुए बार-बार संसार में जन्म लेते और

मरते रहते हैं। किन्तु जब मुक्त होना चाहते हैं तब ब्राह्मणादि का शरीर प्राप्त करके अपनी इच्छानुसार वेदोक्त साधना करके इस संसार से मुक्त हो जाते हैं। अथवा परमात्मा में लीन हो जाते हैं। योगीगण उसी परमात्मा का साक्षात्कार अपने हृदयदेश में करते हैं।।१०।।

*इदानीं योगं दर्शयति-*

**अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः।**
**आदित्यो गिरते चन्द्रमादित्यं गिरते परः।।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।११।।**

**चातकप्रिया सं० व्या०**--सम्प्रति परमात्मानं द्रष्टुमुपायं योगं संक्षिप्य कथयति-प्राणः = प्राणवायुः, अपानम् = अपानवायुम्, गिरति = स्वात्मनि उपसंहरति, चन्द्रमाः = मनः, प्राणं, गिरति, आदित्यः =बुद्धिः, स्वात्मनि, चन्द्रं = मनः,लीनं करोति, परः = परमात्मा, आदित्यं= बुद्धिं स्वात्मनि विलापयति-एष एव संक्षेपेण योगरीतिः। यथोक्तम्-

"पार्ष्णिना गुदमापीड्य दन्तैर्दन्तान् संस्पृशन्।
दृढासनोऽपानवायुमुन्नयेच्च शनैः शनैः।।
तत्प्राणेनैकतां नीत्वा स्थिरं कृत्वा हृदम्बरे।
चेतोमात्रेण तिष्ठेत तच्च बुद्धौ विलापयेत्"।।११।।

**चातकप्रिया हिन्दी**-अब परमात्मा को प्राप्त कराने वाले योग के विषय में कहते हैं-योग की शास्त्रोक्त विधि इस प्रकार है-योगी को चाहिए कि वह गुद--स्थित अपान वायु को हृदय--स्थित प्राण वायु में, प्राण वायु को मन में, मन को बुद्धि में और बुद्धि को अपनी आत्मा (परमात्मा) में लीन कर दे। इसके बाद हृदय में ही परमात्मा के दर्शन हो जाते हैं। प्राण--अपान वायु, संकल्प--विकल्पात्मक मन और निश्चयात्मिका बुद्धि--के एक होने पर आत्मचिन्तन करता हुआ

योगी निर्विकल्पक समाधि में पहुँचता है और तभी वह ब्रह्म में लीन हो जाता है।।११।।

*इदानीं परस्य जीवात्मनावस्थानं प्रदर्शयति-*

**एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन्।**
**तं चेत् सततमुत्क्षिपेन्न मृत्युर्नामृतं भवेत्।।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।१२।।**

**चातकप्रिया सं० व्या०**--हंसः = अविद्यां तत्कार्यं च हन्तीति हंसः परमेश्वरः, अथवा शरीरवृक्षमारूढोऽपि तेनासम्बद्धः हंस इव हंसः परमात्मा, सलिलात् = भूतभौतिकस्वरूपात् संसारात्, उच्चरन् = ऊर्ध्वं संसाराद्बहिरेव चरन् वर्तमानः, एकं = जीवनामकं पादं =चरणम् अंशं वा, नोद्धरति = नोपसंहरति। अयमाशयः-हृदस्थोऽपि परमात्मा जाग्रत्स्वप्नसुषुप्ततुरीयाणामवस्थानां मध्ये तुरीयामवस्था कदाचिदपि न प्रकटयति। तथा च श्रुतिः-"एकस्तथा सर्वभूतान्तरात्मा"। एकं पादं कस्मान्नोक्षिपति? कथयति-चेत् = यदि, तं = जीवाख्यं पादम्, सततं= जाग्रदादिषु त्रिष्ववस्थासु व्याप्तं निरन्तरयायिनम्, उत्क्षिपेत् = स्वमायाबलेन स्वात्मानं प्राणाद्यनन्तभेदात्मकं विधाय तेषु प्रवेशमकृत्वा जीवात्मना नावतिष्ठेत्, तदा, मृत्युः = जननमरणादिस्वरूपः संसारः, न, भवेत् = जायेत, संसारिणो जीवस्याभावात् तथा अमृतम् = मोक्षः, न भवेत्, अननुप्रविष्टस्य दर्शनाभावात्। यथा श्रुतिरथर्वणी-"एकं पादमित्यादयः"। "एकं रूपं बहुधा यः करोति" इति च। यः परमात्मा एकेन पादेन जीवात्मना पादत्रयेण च सच्चिदानन्दाद्वितीयब्रह्मात्मना स्थितस्तं योगिन एव हृदि पश्यन्ति।।१२।।

**चातकप्रिया हिन्दी**--हंस-परमात्मा-सलिल (संसार) से ऊपर चलता हुआ एक पाद (जीवरूपी) संसार से बाहर नहीं निकलता है। यदि वह उस एक पाद को निकाल ले तो जन्म मृत्यु-रूपी संसार नहीं

होगा और न ही मोक्ष ही सम्भव हो सकेगा। अभिप्राय यह है कि हंससदृश वह परमात्मा संसार-सलिल से स्वयं ऊपर (अलग) रहता हुआ अपने एक अंश (जीव) को अपनी माया से अलग नहीं होने देता। यदि वह माया से अलग कर दे तो फिर किसका जन्म, किसकी मृत्यु और किसका मोक्ष? अर्थात् जीवात्मा-परमात्मा के एक हो जाने पर सम्पूर्ण व्यवस्था स्वतः ही ध्वस्त हो जाती है। ऐसे उस परमात्मा को योगीजन अपने हृदय में देखते हैं।।१२।।

*परमात्मा केनोपाधिना जीवात्मनावतिष्ठते इत्याह-*

**अंगुष्ठमात्रः पुरुषोऽन्तरात्मा**
**लिङ्गस्य योगेन स याति नित्यम्।**
**तमीशमीड्यमनुकल्पमाद्यं**
**पश्यन्ति मूढ़ा न विराजमानम्।।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।१३।।**

**चातकप्रिया सं० व्या०**--स एव = सच्चिदानन्दाद्वितीय एव, अन्तरात्मा= बाह्यात्मभ्योऽन्नमयादिभ्यः पञ्चभ्यः आन्तरः, पुरुषः = पुरि शरीरे शयनात् पुरुषः पूर्णः परमात्मा, लिङ्गयोगेन = लिङ्गस्य पञ्चप्राणमनोबुद्धि-दशेन्द्रियात्मकस्य लिङ्गशरीरस्य सम्बन्धेन, अंगुष्ठमात्रः = अंगुष्ठमात्र-परिणामपरिच्छिन्नः, नित्यं = सर्वदा, याति = इहलोकपरलोकौ जाग्रत्स्वप्नौ वा गच्छति। तम् ईशं = यमयितारम्, ईड्यम् = स्तुत्यम्, अनुकल्पम् = उपाधिमनु सर्वकार्येषु समर्थम्, आद्यम् = मूलकारणम्, विराजमानं = प्रत्यक्चैतन्यरूपेण सर्वशरीरेषु प्रकाशमानमपि, मूढाः= अविद्याग्रस्ताः देहद्वयात्माभिमानिनः, न पश्यन्ति। अतः संसरन्ति। योगिनस्तं पश्यन्ति, मुक्ता भवन्ति।।१३।।

**चातकप्रिया हिन्दी**--वह परमात्मा पूर्णपुरुष, सच्चिदानन्द होकर भी अंगुष्ठमात्र आकार लेकर सम्पूर्ण प्राणियों के हृदय में विराजमान

रहता है और लिङ्गशरीर (मन, बुद्धि, पाँच प्राण और दस इन्द्रियों) के सम्बन्ध से नाना योनियों में आता--जाता रहता है। वह परमात्मा सबका शासक, स्तुत्य, सर्वसमर्थ एवं सबका आदि कारण है। उसको अज्ञानी नहीं देख पाते, किन्तु योगी अपने हृदय में उस परमात्मा के दर्शन करते हैं।।१३।।

*सम्प्रति विषयाणामिन्द्रियाणां चानर्थहेतुत्वं दर्शयति-*

**गूहन्ति सर्पा इव गह्वरेषु**
**क्षयं नीत्वा स्वेन वृत्तेन मर्त्यान्।**
**तं विप्रमुह्यन्ति जना विमूढाः**
**तैर्दत्ता भोगा मोहयन्ते भवाय।।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।१४।।**

**चातकप्रिया सं० व्या०**--सर्पाः = अहयः, इव = यथा, मनुष्यस्येन्द्रियाणि, स्वेन = स्वकीयेन, वृत्तेन = आचरणव्यवहारेण विषयविषप्रदानेन, मर्त्यान् = मरणधर्मान् प्राणिनः, क्षयं = विनाशम्, नीत्वा = प्रापयित्वा, गह्वरेषु = विलेषु स्वस्वगोलकेषु, गूहन्ति = स्वात्मानमाच्छादयन्ति। ते = विषयविषदग्धाः जीवाः, विप्रमुह्यन्ति = विशेषेण मुह्यन्ति शरीराद्यतिरिक्तमात्मानं किञ्चिदपि न जानन्ति। तैः = इन्द्रियैः, दत्ताः = उपस्थापिताः, भोगाः = विषयाः रूपरसादयः, मर्त्यान्, भवाय = जन्मजरामरणस्वरूपाय संसाराय, मोहयन्ते = आच्छादयन्ति। अत एवात्मजिज्ञासु विषयान् परित्यजेत्। यं परमात्मानमदृष्ट्वा विषयविषान्धा मुह्यन्ति, तं योगिनः पश्यन्ति। परमात्मानं द्रष्टुं योग एवोपायः।।१४।।

**चातकप्रिया हिन्दी**--जैसे सर्प लोगों को डँस कर अपने बिलों में जाकर छिप जाते हैं, वैसे ही मनुष्य की इन्द्रियाँ अपने--अपने रूप-रसादि विषय-विष से मनुष्य को पूर्ण प्रभावित कर अपने-अपने

गोलकों में छिप जाती हैं। इन्द्रियप्रदत्त भोगों से अज्ञानी जीव अत्यन्त मोहित हो जाते हैं। वही भोग मनुष्य के लिए जरा, जन्म और मृत्यु का कारण होते हैं। जिस परमात्मा से विमुख होने के कारण मनुष्य विषयविष से प्रभावित होता है, उस परमात्मा को योगीजन हृदय में देखते हैं।।१४।।

*संमतिमाह-*

**नात्मानमात्मस्थमवैति मूढः**
**संसारकूपे परिवर्तते यः।**
**त्यक्त्वाऽऽत्मरूपं विषयांश्च भुङ्क्ते**
**स वै जनो गर्दभ एव साक्षात्।।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।१५।।**

**चातकप्रिया सं० व्या०**--यः = कश्चित् सामान्यो जनः, मूढः = आत्मानात्मविवेकशून्यः पुरुषः, आत्मस्थं = आत्मनि विराजमानम् तत्साक्षितया प्रकाशकतया तिष्ठन्तं (परमात्मानम् ) न जानाति स एवाहमिति न जानाति, अस्मादेव कारणात् च संसारकूपे = संसार एव कूपस्तस्मिन्, परिवर्तते = परिभ्रमति। भूयोभूयः श्वशूकरादियोनिम्प्राप्नोति। तथा च स एव जनः आत्मरूपं = अपरोक्षात्मचैतन्यं शरीरादिदोषरहितम्, त्यक्त्वा = परित्यज्य अविवेकात्, विषयान् = अनित्यान् भोगान्, भुङ्क्ते = सेवते, एतादृशो विषयासक्तो जनो नास्ति। पुनश्च स कः? उच्यते-साक्षात् = दृश्यमानः, गर्दभ एव विषयशतभारवहनादिति। तमेवंविधमात्मानं योगिन एव पश्यन्ति।।१५।।

**चातकप्रिया हिन्दी**--जो शूकर--कूकर आदि नाना प्रकार की योनियों में भटकता रहता है वह मूढ अनात्मविद् अपनी अन्तरात्मा में अवस्थित परमात्मा को नहीं जानता। ऐसा व्यक्ति पुत्र, कलत्र आदि सांसारिक विषयों में आसक्त रहता है और विषयभोगों को ही सर्वस्व समझता

है। ऐसा पुरुष साक्षात गदहा है, जो केवल विषयों का भार ढोता रहता है। योगीजन उस परमात्मा के दर्शन करते हैं, जिसको न देखने के कारण जीव विषयासक्त रहता है।।१५।।

*ज्ञानिनां मोक्षस्वरूपं कथयति--*

**असाधना वाऽपि ससाधना वा**
**समानमेतत् दृश्यते मानुषेषु।**
**समानमेतदमृतस्येतरस्य**
**युक्तास्तत्र मध्व उत्सं समापुः।।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।१६।।**

**चातकप्रिया सं० व्या०**--शङ्कते-अङ्गुष्ठपरिमाणः परमात्मा हृदयस्थः सन् हृत्तापमप्यनुभवेत् तापस्वभावस्य च कुतो मुक्तिरिति? तस्य परमात्मनः कदाचिदपि तापो नास्तीत्युच्यते-असाधनाः = शमदमादि-साधनशून्याः, वापि = अथवा, केचित् ससाधनाः =शमाद्युक्ताः स्युः, वा परन्तुं, मानुषेषु = मनुष्येषु संघाताभिमानिषु, एतत् = तत्स्थं ब्रह्म, समानम् = साधारणं निर्विकारं, दृश्यते = अनुभूयते, तथा = तद्वदेव, अमृतस्य = मोक्षस्य, इतरस्य = संसारस्य विषयेऽपि, एतद् ब्रह्म समानम्। यद्येवं कस्तर्हि मुक्तेषु विशेष इत्याह--युक्ता इति। तत्र = बद्धमुक्तयोः मध्ये, युक्ताः = साधनयुक्ता एव, मध्वः = मधुनः ब्रह्मानन्दस्य, उत्सं= उत्कर्षं पराकाष्ठां समापुः = प्राप्नुवन्ति। यमुत्सं युक्ताः सम्प्राप्नुवन्ति तं सम्पूर्णानन्दं ब्रह्म योगिन एव पश्यन्ति।।१६।।

**चातकप्रिया हिन्दी**--चाहे कोई शम--दम आदि साधनों वाला हो, चाहे कोई उससे हीन हो, पर वह परमात्मा समस्त प्राणियों में समान रूप से व्याप्त रहता है। वह बद्ध और मुक्त जीव में भी समान रूप से दिखलायी पड़ता है। फिर भी साधनसम्पन्न व्यक्ति आनन्द के मूल स्रोत परमात्मा को प्राप्त कर लेते हैं, जबकि विषयासक्त

अज्ञानी उसे देख भी नहीं पाते। परमात्मा स्वयं में सर्व--व्यापक है। उसका न कोई प्रिय है और न कोई अप्रिय। योगीजन उसी पूर्णानन्द ब्रह्म का साक्षात्कार करते हैं।।१६।।

*किञ्च-*

**उभौ लोकौ विद्यया व्याप्य याति**
**तदाहुतं चाहुतमग्निहोत्रम्।**
**मा ते ब्राह्मी लघुतामादधीत**
**प्रज्ञानं स्यान्नाम धीरा लभन्ते।।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।१७।।**

**चातकप्रिया सं० व्या०**--एवञ्च ब्रह्मोपलब्धिरेव सर्वफलोपलब्धिरित्याह-उभाविति। विद्यया = ब्रह्माकाराकारितवृत्त्या, उभौ = इहपरौ, लोकौ, व्याप्य = सर्वात्मभावेनाधिकृत्य, याति = प्रारब्धभोगपर्यन्तं ब्रजति, तत् = तस्मात्, आहुतम् = अकृतम्, अग्निहोत्रम् = यज्ञादिकर्म, आहुतं= अनेनात्मज्ञानेनाभिमुख्येन सम्पादितं भवति। तस्मादेव, ते = तव, ब्राह्मी= ब्रह्मविषयिणी विद्या वृत्तिर्वा, लघुतां = मर्त्यभावम्, कर्मवत्, मा= न, आदधीत = करोतु, अपितु प्रज्ञानं = तमसः परं परमात्मानम् आत्मत्वेन सम्पादयतु। तस्य ब्रह्मविद्याव्यापृतस्य परमात्मानं चात्मत्वेनावगच्छतो जीवस्य विवेकिनः पुरुषस्य वा नाम प्रज्ञानम् =ब्रह्म, इत्येव स्यात् = भवति। तत् = प्रज्ञानं ब्रह्म, धीराः = ध्यानयोगसिद्धा एव, लभन्ते = प्राप्नुवन्ति। तं योगिन एव पश्यन्ति-तथा च श्रुतिः-"प्रज्ञानं ब्रह्म", "ब्रह्मविद् ब्रह्मैव भवति"।।१७।।

**चातकप्रिया हिन्दी**--ज्ञानी पुरुष अपने ज्ञान के द्वारा इहलोक और परलोक-दोनों लोकों को सर्वात्मभाव से अधिकृत करके अवस्थित रहता है। उसके द्वारा अग्निहोत्रादि कर्म बिना हुए भी पूर्ण समझे जाते हैं। जीवन्मुक्त प्रारब्ध कर्म भोगने तक अनासक्त भाव से ब्रह्म-

भाव में स्थित होकर सारे व्यवहार निभाता है। अतः हे राजन्! उस ब्रह्मविद्या को पाकर भी तुममें तुच्छ भाव न उत्पन्न हों। ब्रह्म को प्राप्त करने वाले का नाम प्रज्ञान हो जाता है। वह ब्रह्म स्वयं प्रज्ञान है। उसे ध्यान से सिद्ध पुरुष ही प्राप्त करते हैं। योगी जन उसी सनातन ब्रह्म के दर्शन अपने हृदय में योगयुक्त होकर करते हैं।।१७।।

*किंच-*

**एवंरूपो महानात्मा पावकं पुरुषो गिरन्।**
**यो वै तं पुरुषं वेद तस्येहात्मा न रिष्यते।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।१८।।**

**चातकप्रिया सं० व्या०**--यः एवंरूपः = वाङ्मनसातीतः प्रज्ञानैकरसः ब्रह्मस्वरूपः सन् आस्ते, स आत्मा, महान् = सर्वव्यापकः, ब्रह्मैव, सम्पद्यते = भवति। तथा च पावकम् = अग्निम् सर्वोपसंहृतिरूपं कारणं सकारणं कार्यं, गिरन् = स्वात्मनि उपसंहरन् , यो, वै = निश्चयेन, तं पुरुषं = पुरि शयं पूर्णं ब्रह्म ज्ञानैकरसम्, वेद = अयमहमस्मीति साक्षाज्जानाति, तस्य = परमात्मानमात्मत्वेन बोधयतः, इह = अस्मिन्नेव शरीरे, आत्मा न, रिष्यते = विनश्यति। यतो हि आत्मविदः व्युत्क्रान्तिरसम्भवा। तथा च श्रुतिः-"अत्रैव समवलीयन्ते न तस्य प्राणा उत्क्रामन्ति, ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद" इति। अज्ञानिनश्चोत्क्रमणं श्रूयते-"पुनः पुनर्वशमापद्यते", "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः", "स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्"। यं ज्ञात्वा नोत्क्रामन्ति तं भगवन्तं योगिन एव पश्यन्ति नेतर--इति।।१८।।

**चातकप्रिया हिन्दी**--इस प्रकार आत्मज्ञान से सम्पन्न समग्र अग्नि (कार्य--कारणसमूह) को स्वात्मा में लीन करता हुआ व्यापक होकर ब्रह्म ही हो जाता है। जो पुरुष अपनी आत्मा को जानता है वह

शरीर में रहता हुआ, शरीर के नष्ट होने पर भी नष्ट नहीं होता। उस सनातन परमात्मा को योगीजन अपने हृदय में देखते हैं।।१८।।

*यस्मात् तद्विज्ञानादेव नात्मनो विनाशस्तस्मात्--*

**तस्मात् सदा सत्कृतः स्यान्न मृत्युरमृतं कुतः।**
**सत्यानृते सत्यसमानुबन्धिनी सतश्च योनिरसतश्चैक एव।।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।१९।।**

**चातकप्रिया सं० व्या०**--यस्मात् सच्चिदानन्दात्मनावस्थितस्य आत्मा न रिष्यते तस्मात् सदा = अहर्निशम्, सत्कृतः = सतां युक्तः सच्चिदानन्दाद्वयब्रह्मात्मनावस्थितः स्यात्। तस्य = ब्रह्मविदः, मृत्युः = जननमरणलक्षणः संसारो, न भवेत् । अमृतम् = अमृतत्वम्, कुतः= कुत्र, न कस्माच्चिदपीति भावः। मृत्युसापेक्षत्वादमृतस्य तदभावे कुतः प्रसक्तिः? तथा च श्रुतिः "मृत्युर्नास्त्यमृतं कुतः" पुनः कथयति-सत्यानृते सत्यं च अनृतं च ते, सत्यसमानुबन्धिनी = परमार्थसत्यमेकमधिष्ठानमाधृत्य, वर्तेते-रज्ज्वामिव सर्पः। एतत् कथमवगम्यते? तत्राह-सतः = लौकिकस्य कार्यस्य, असतः = कारणस्य च, योनिः = जननमरणस्थानम् एकः एव = परमात्मैव नान्यत ब्रह्मातिरिक्तं किमपि यथा सत्यं घटादि असत्यं च रज्जूरगादि ते उभे अपि सत्यसमानुबन्धे सत्यं समानमबाधितं सर्वद्रेशेषु चैकरूपं ब्रह्म तदेव निग्रहस्थानं ययोः ते, एवं सर्वमेव जगद् ब्रह्माधीनं वर्तते। तदतिरिक्तं किमपि नास्ति। तथा च श्रूयते-"न विरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता।।" इति "सर्वं खल्विदं ब्रह्म" इत्यपि। एवं प्रतिफलति यदिदमखिलं सृष्ट्यादिकं ब्रह्मण्येवास्ति कल्पितम् ।।१९।।

**चातकप्रिया हिन्दी**--इस प्रकार आत्मसाधक को चाहिए कि वह निरन्तर परब्रह्म में ही अपना तादात्म्य स्थापित किये रहे। उससे सत्कृत जीवन्मुक्त के लिए जन्म - मरणरूप संसार की भाँति मोक्ष

की भी कोई उपस्थिति न होगी, क्योंकि इन दोनों की अपेक्षा से शून्य ही जीवन्मुक्त होता है। रस्सी में सर्प--प्रतीति की भाँति सत्य और असत्य-दोनों की कल्पना सत्यस्वरूप परब्रह्म से ही है, क्योंकि वही सबका अधिष्ठान है। रस्सी ही सर्प है या नहीं है-दोनों का आधार है। इसी प्रकार परब्रह्म की सत्ता पर ही जगत् की सत्ता और असत्ता दोनों आधृत है। योगी उस त्रैकालातीत परब्रह्म को अपने हृदय में देखते हैं।।१९।।

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
न दृश्यतेऽसौ हृदये निविष्टः।
अजश्चरो दिवारात्रमतन्द्रितश्च
स तं मत्वा कविरास्ते प्रसन्नः।।२०।।

**चातकप्रिया सं० व्या०**--असौ = अयम्, आकाशादिशरीरान्तं जगन्निर्माय, अङ्गुष्ठमात्रः = अङ्गुष्ठपरिमाणः, अन्तरात्मा = अन्तर्यामी पुरुषः, हृदये = हृद्गुहायाम्, निविष्टः = स्थितोऽपि, न दृश्यते विषयासक्तैः, रूपादिहीनत्वात्। स च परमात्मा, अजः = जन्मादिशून्यः, चरः =चरतीति चरः = विश्वरूपः अस्ति। सः = अधिकारी, अतन्द्रितः = सावधानः सन् अन्नादिकोशेभ्यो निष्क्रम्य, तं = परमात्मानं, दिवारात्रम् = निरन्तरम्, मत्वा = विज्ञाय, कविः = तत्त्वद्रष्टा, आस्ते = भवति, कर्मभ्य उपरतो भवति कृतार्थत्वात् । अतश्च प्रसन्नः = उपाधिकृत-मालिन्यमोचनान्निर्मलः भवति।।२०।।

**चातकप्रिया हिन्दी**--वह अंगुष्ठ परिमाण वाला परमात्मा सम्पूर्ण प्राणियों के हृदय में स्थित है, परन्तु सूक्ष्म तथा रूपादिरहित होने के कारण किसी को दिखाई नहीं पड़ता। वह अजन्मा, विश्वरूप है। उस परमात्मा को निरन्तर सावधान ज्ञानी पुरुष जान कर उपाधिमुक्त, तत्त्वज्ञानी और निर्मल हो जाता है।।२०।।

*इदानीं ब्रह्मणो विश्वोपादानत्वमाह--*

**तस्माच्च वायुरायातस्तस्मिंश्च प्रलयस्तथा।**
**तस्मादग्निश्च सोमश्च तस्माच्च प्राण आगतः।।२१।।**
**तत्प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः।**
**भूतानि जज्ञिरे तस्मात् प्रलयं यान्ति तत्र च।।२२।।**

**चातकप्रिया सं० व्या०**--तस्मात् = पूर्णात् परमात्मनः एव वायुः= पञ्चभूतगणः, आगतः = प्रकटितः। तथा च श्रुतिः-"**तस्माद् वा एतस्मादात्मनः आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवीति तत एव सर्वभूतोद्भवश्रुतेः।**" अग्निः = भोक्ता, जीवः तस्मादेव, सोमः = भोज्यम् तस्मादेव, प्राणः = देहेन्द्रियादिसंघातः तस्मादेव परमात्मनः प्राप्तः। सर्वेषां प्रलयोऽपि संहारकाले विलयोऽपि तस्मिन्नेव भवति। यतः इदमखिलं तत एवागतं तस्माज्जातं तस्मिन् प्रतिष्ठितम् अतस्तदेव ज्ञेयं ध्येयम्। लोकाः =भूरादयः, तत्प्रतिष्ठाः = तद् ब्रह्म प्रतिष्ठा अधिष्ठानं येषां ते तादृशाः, सन्ति। तद् ब्रह्म अमृतं = अविनाशि, तद् यशः = विशदम्, तस्मादेव परमेश्वरात्, भूतानि = जगन्ति, जज्ञिरे = जायन्ते। तत्रैव च स्थित्वा प्रलीयन्ते। एवं सर्वं ब्रह्मैव सिद्ध्यति।।२१-२२।।

**चातकप्रिया हिन्दी**--उसी परब्रह्म परमात्मा से वायु आदि पञ्च महाभूत उत्पन्न हैं और उसी में इनका लय होता है। उसी ब्रह्म से अग्नि (भोक्ता) सोम (भोज्य) तथा प्राण (शरीरादि संघात) उत्पन्न हुआ है। सम्पूर्ण लोक उसी में स्थित है। वह सबका आश्रय है। वह अविनाशी है। वह यशोरूप है। सभी भूत (प्राणी)उसी से पैदा हुएं हैं और अन्त में उसी में लीन हो जाते हैं।।२१-२२।।

**उभौ च देवौ पृथिवीं दिवं च**
**दिशश्च शुक्लं भुवनं विभर्ति।**

**तस्माद्दिशः सरितश्च स्रवन्ति**

**तस्मात् समुद्रा विहिता महान्तः।।२३।।**

**चातकप्रिया सं० व्या०**--शुक्लं = शुद्धं कर्तृ ब्रह्मैव, उभौ देवौ= जीवेश्वरौ, पृथ्वीं, दिवं, दिशः, भुवनं च, विभर्ति = धारयति पुष्णाति च। तस्मादेव शुक्लात् ब्रह्मणः, दिशः = उपदिशः, सरितः = नद्यः, स्रवन्ति = निर्गच्छन्ति, तस्मादेव महान्तः = महान् दुरधिगः अन्तो येषां ते समुद्राः = सागराः कामा वा, विहिताः = विरचिताः। तथा च श्रुतिः-"**एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः**" इति।।२३।।

**चातकप्रिया हिन्दी**-वही शुद्ध कर्तृ ब्रह्म जीव ईश्वर-दोनों देवों को धारण करता है। उसी ने पृथिवी, आकाश, दिशा, उपदिशा तथा सम्पूर्ण भुवनों को धारण किया है। नदियाँ उसी से प्रवाहित हैं। दुरधिगम सागर उसी से विरचित हैं। गीता के विभूतियोग में भगवान् ने और भी विस्तार से समझाया है कि हे अर्जुन ! सब कुछ मैं ही हूँ।।२३।।

***इदानीं ब्रह्मणोऽनन्तत्वं कथयति-***

**यं सहस्रं सहस्राणां पक्षानाहृत्य सम्पतेत्।**

**नान्तं गच्छेत् कारणस्य यद्यपि स्यान्मनोजवः।।**

**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।।२४।।**

**चातकप्रिया सं० व्या०**--ज्ञानं न केवलं मोक्षमेव ददात्यपि तु सकलमेव दूरस्थमपि आत्मन्यन्तर्भूतमेवास्ति--य इति। यः = पुरुषः, सहस्राणां = पक्षिणाम्, सहस्रम् = पक्षान्, आहृत्य = आत्मनः पक्षान् कृत्वा, सम्पतेत् = उड्डयनं कुर्यात्, परन्तु कारणस्य = सृष्टेरादिकारणस्य, अन्तं न गच्छेत् = प्राप्नुयात्, यद्यप्यसौ मनोजवस्तथाप्यात्मः अन्तं न गच्छेत्। यस्मादन्तं न गच्छेत् तस्मादनन्त एव .परमेश्वरः। तमनन्तं

परमात्मानं योगिन एव पश्यन्ति।।

**चातकप्रिया हिन्दी**--कोई भी पुरुष हजारों पक्षियों के पंखों को धारण करके मनसदृश गतिमान् होकर उड़ता रहे, किन्तु वह सृष्टि के आदिकारण का पता नहीं लगा सकता। उस आदिकारण परमात्मा का अन्त नहीं पा सकता। क्योंकि ब्रह्म अनन्त, सर्वव्यापक है, अस्तु सृष्टि भी अनन्त है। अन्ततः हृदयस्थित परमात्मा के समीप ही आना श्रेयस्कर है। उस आदिकारण परमात्मा के दर्शन योगीजन ही कर पाते हैं।।२४।।

*किंच*--

**अदर्शने तिष्ठति रूपमस्य**
**पश्यन्ति चैनं सुसमिद्धसत्त्वाः।**
**हीनो मनीषी मनसाभिपश्येद्**
**य एनं विदुरमृतास्ते भवन्ति।।२५।।**

**चातकप्रिया सं०व्या०**--अस्य = परमात्मनः, रूपम् = स्वरूपम्, अदर्शने= दर्शनायोग्यविषये, तिष्ठति। तथा च श्रुतिः-"न संदृशे तिष्ठति रूपमस्य"। च = परन्तु, सुसमिद्धसत्त्वाः = सु सम्यक् समिद्धं दीप्तम् अन्तःकरणम् यज्ञादिभिः स्वच्छीकरणसंस्कारेण येषां ते सुसमिद्धसत्त्वाः। तस्मात् हीनः= रागद्वेषादिरहितः, मनीषी = मनोनिग्रहशीलः, मनसा = विशुद्ध-मनसा, अभिपश्येत्। य एनं परमात्मानं विदुः = जानन्ति-"अहमस्मीति"। ते अमृताः = मुक्ताः, भवन्ति।।२५।।

**चातकप्रिया हिन्दी**--इस परमेश्वर का स्वरूप दृष्टि शक्ति से परे है। उस परमात्मा को शुद्ध अन्तःकरण वाले पुरुष ही देखते हैं। राग-द्वेषसे रहित मनोनिग्रहशील व्यक्ति ही परमात्मा को जान पाते हैं। जो इस परमात्मा को जानता है वह अमर हो जाता है।।२५।।

इमं यः सर्वभूतेषु आत्मानमनुपश्यति।
अन्यत्रान्यत्र युक्तेषु स किं शोचेत् ततः परम्।।२६।।

चातकप्रिया सं०व्या०--यः = पुरुषः, अन्यत्रान्यत्र = देहेन्द्रियादियुक्तेषु, सर्वभूतेषु = सर्वप्राणिषु, इमं = सर्वान्तःस्थम्, आत्मानम् = परमात्मानम्, अनुपश्यति = साक्षात्करोति ध्यानेन, सः ततः = परमात्मनः, परं= उत्तमं वस्तु, किम् = वस्तु, शोचेत् = चिन्तयेत् । परमात्मनो दर्शनेन कृतार्थत्वात् किमपि नानुशोचति। तथा च श्रुतिः-"तत्र को मोहः कः शोक एकत्वमनुपश्यतः"।।२६।।

चातकप्रिया हिन्दी--विशुद्ध सत्त्ववान् जो पुरुष विविध विषयों में संसक्त समग्र प्राणियों में भी अपनी आत्मा के दर्शन करता है, उस सर्वभूतात्मा पुरुष को किसी के विषय में शोक और मोह नहीं होता।।२६।

यथोदपाने महति सर्वतः सम्प्लुतोदके।
एवं सर्वेषु भूतेषु ब्राह्मणस्य विजानतः।।२७।।

चातकप्रिया सं० व्या०--यथा = येन प्रकारेण, सर्वतः = सर्वभावेन, संप्लुतोदके = सलिलसम्भृते, महति = विशाले, उदपाने = उदकं पीयतेऽस्मिन्निति उदपाने जलाशये कासारादौ गत्वा कृतार्थस्य पुरुषस्य, अल्पे उदपाने कश्चिदर्थो नास्ति, एवं सर्वेषु भूतेषु आत्मानं विजानतः= आत्मज्ञस्य, ब्राह्मणस्य, किञ्चिदपि प्रयोजनं न वर्तते। आत्मसाक्षात्कारेणैव कृतार्थतालाभात्। तथा चाह भगवान् कृष्णः-"न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः"। श्रुतिरपि-"न तस्य हृदयं तपति किमहं साध्वकरवमसाधु वेति"।।२७।।

चातकप्रिया हिन्दी--जैसे हर प्रकार से प्रपूर्ण जलाशय मिल जाने के बाद किसी प्यासे की क्षुद्र जलाशय में जाने की इच्छा नहीं होती, वैसे ही आत्मद्रष्टा के लिए सांसारिक वस्तुओं में कोई प्रयोजन

शेष नहीं रहता। वह स्वयं ही पूर्णकाम हो जाता है।।२७।।

**अहमेवास्मि वो माता पिता पुत्रोऽस्म्यहं पुनः।**
**आत्माहमस्य सर्वस्य यच्च नास्ति यदस्ति च।।२८।।**

**चातकप्रिया सं० व्या०**-हे राजन् धृतराष्ट्र ! अहमेव = आत्मज्ञानी सनत्सुजात एव, वः = युष्माकम्, माता = जननी, पिता = भीष्मादिः अपि अहमेवास्मि। पुनश्चाहमेव युष्माकं पुत्रः = दुर्योधनादिः अस्मि। किं बहुना, अहमेव सर्वस्य = भूतसमूहस्य, आत्मास्मि। यच्च नास्ति यच्चास्ति तस्याप्यहमेवात्मा।।२८।।

**चातकप्रिया हिन्दी**--शोक मोहग्रस्त धृतराष्ट्र को समझाते हुए सनत्सुजात कहते हैं-हे राजन् ! आत्मस्वरूप में मैं ही तुम्हारा माता--पिता हूँ। मैं ही तुम्हारा पुत्र-दुर्योधनादि हूँ। मैं सबका आत्मा हूँ।जो इस लोक में है.और जो नहीं है-वह सब भी मैं ही हूँ। इस संसार का जो भी सम्बन्ध है, वह अवास्तविक है। अस्तु उसके लिए शोक--मोह करना उचित नहीं।।२८।।

**पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत।**
**ममैव यूयमात्मस्था न मे यूयं न चाप्यहम्।।२९।।**

**चातकप्रिया सं० व्या०**--भारत = राजन् !, स्थविरः = वृद्धः, पितामहः= इन्द्रोदः पितामहः, अनादिसिद्धः परमात्मा सोऽप्यहमेवास्मि। पिता अस्मि। पुत्रः अस्मि। ममैव यूयं = धृतराष्ट्रादयः आत्मस्थाः, एवं यूयं सर्वेऽपि परमार्थतो मम आत्मनि न व्यवस्थिताः। न चाप्यहं युष्मासु स्थितोऽस्मि। यथाह भगवान् वासुदेवः "मत्स्थानि सर्वभूतानि।"।।२९।।

**चातकप्रिया हिन्दी**--हे राजन् ! मैं ही आपका वृद्ध पितामह, पिता एवं पुत्र हूँ। तुम लोग मेरी ही आत्मा में स्थित हो। परन्तु वास्तविक रूप से न तुम मेरे हो और न मैं तुम्हारा हूँ। आत्मा से अलग किसी का अस्तित्व नहीं है। समग्र सम्बन्धों की मान्यता भेद-व्यवहार

के कारण ही है। अभेद दृष्टि होने पर सब कुछ एक आत्मा है।।२९।।

**आत्मैव स्थानं मम जन्म चात्मा**
**ओतप्रोतोऽहमजरप्रतिष्ठः।**
**अजक्षरो दिवारात्रमतन्द्रितोऽहं**
**मां विज्ञाय कविरास्ते प्रसन्नः।।३०।।**

**चातकप्रिया सं० व्या०**-मुमुक्षूणामहमेव ज्ञेय इत्याह—**आत्मैवेति**। यद्यपि ममात्मनि यूयं न स्थिता, न चाप्यहं युष्मासु स्थितोऽस्मि तथापि मम स्थानं = आश्रयः, आत्मैव स्वे महिम्नि प्रतिष्ठितः इति। अतएव मम जन्म--जननहेतुरपि आत्मास्ति। अस्मादेवात्मनः सर्वमुत्पन्नमित्यभिप्रायः। तथा च श्रुतिः-"**आत्मन एवेदं सर्वम्**"। अहं ओतप्रोतः = सर्वेषु अनुस्यूतः अस्मि। अहम् अजरप्रतिष्ठः = अजरा अप्रच्युतस्वभावा प्रतिष्ठा अधिष्ठानत्वं यस्य सः। एवंभूतं मां सर्वभूतानामन्तरात्मानं सर्वेश्वरं विज्ञाय कविः विद्वान्, प्रसन्नः = कृतार्थः, आस्ते। तथा च श्रुतिः-"**स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि**" इति।।३०।।

**चातकप्रिया हिन्दी**--हे राजन् ! आत्मा ही मेरा निवास--स्थान है और आत्मा ही उत्पत्ति--स्थान है। मैं जरा-मरण से रहित महामहिमावान् हूँ। मैं ही अजन्मा, चराचरस्वरूप हूँ। मैं दिन-रात जागृत रहता हूँ। मुझे जानकर ज्ञानी पुरुष परमानन्द में निमग्न हो जाते हैं।।३०।।

**अणोरणीयान् सुमनाः सर्वभूतेष्ववस्थितः।**
**पितरं सर्वभूतानां पुष्करे निहितं विदुः।।३१।।**

*इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैय्यासिक्यामुद्योगपर्वणिके धृतराष्ट्रसनत्कुमारसंवादे श्रीसनत्सुजातीयवर्णने चतुर्थोऽध्यायः।।४।।*

**चातकप्रिया सं० व्या०**--प्रकरणार्थमुपसंहरति-**अणोरिति**। अणोः= सूक्ष्मादपि, अणीयान् = सूक्ष्मतरः, सुमनाः = शोभनं रागद्वेष-शोकमोहादिरहितं केवलं चित्सदानन्दाद्वितीयब्रह्मात्माकारं दिव्यचक्षुः मनो यस्य स सुमनाः, सर्वभूतेषु = सर्वप्राणिषु, अवस्थितः = हृदये अन्तर्यामिरूपेण अहमेवास्मीति स्थितः सर्वजगदात्मतया। एवं = अनेन प्रकारेण न केवलमस्माकमनुभवोऽपि तु सनकसनन्दनादयः सिद्धा अपि ब्रह्मविदः सर्वभूतानां = सर्वप्राणिनां, पुष्करे = हृदब्जे, निहितं = विद्यमानम्, पितरम् = सर्वभूतानां जनयितारम् परमात्मानमात्मत्वेन, विदुः = अवगच्छन्ति। तथा च श्रुतिः-**"तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च"** इति वृहदारण्यके। **"एतत्सामगायन्नास्ते"** सामगानेन स्वात्मानुभवः प्रदर्शितः-तैत्तिरीयके। **"तद्धास्य विज्ञौ"** इति छान्दोग्ये। तलवकारेऽपि च-**"अहमन्नम्"** इति मन्त्रैर्विदुषः स्वात्मानुभवो दर्शितः। एवं परमात्मानमेव हृदये पुनः पुनश्चिन्तनविधिना साक्षात्कृत्य कृतार्थो भवति पुरुष इति रहस्यम्।।३१।।

*।।इति सनत्सुजातीयदर्शनस्य चातकप्रियाख्यायां संस्कृतव्याख्यायां चतुर्थश्चरमोऽध्यायः।।४।।*

**चातकप्रिया हिन्दी व्या०**--मैं ही (अणु) सूक्ष्म से सूक्ष्म हूँ। मैं राग-द्वेषादिशून्य मन वाला समस्त भूतों में स्थित हूँ। समग्र प्राणियों के जनक प्रत्यगात्मा को विद्वान् अपने हृदय-कमल में देखते हैं।।३१।।

*सनत्सुजातीयदर्शन के चतुर्थ अध्याय की "चातकप्रिया" हिन्दी व्याख्या समाप्त।।४।।*

❑